# राधापरिणय-महाकाव्यम्

# RĀDHĀ PARIṆAYA MAHĀKĀVYAM

(कविकृत - 'प्रभाख्य - स्वोपज्ञटिप्पणीसमेतम्)






सम्पादकः
डॉ० शशिनाथ झा



प्रकाशकः
नाग प्रकाशकः
११ ए/यू० ए० जवाहर नगरम्,
दिल्ली-११०००७

THIS PUBLICATION HAS BEEN BROUGHT OUT WITH THE FINANCIAL ASSISTANCE FROM RASHTRIYA SANSKRIT SANSTHAN, NEW DELHI

NAG PUBLISHERS

(i) 11A/U.A (Post Office Building), Jawahar Nagar, Delhi 110 007.

(ii) Sanskrit Bhawan, 12,15, Sanskrit Nagar, Plot No 3, Sector-14, Rohini, New Delhi - 110 085

(iii) Jalalpur Mafi, Chunar, Dist. Mirzapur, U. P.



ISBN : 81-7081-276-3

FIRST EDITION : 1998

Price : 70-00

PRINTED IN INDIA

Published by Surendra Pratap for Nag Publishers,
11A/U.A , Jawahar Nagar, Delhi-110007
and printed at G. Print Process, 308/2,
Shahzada Bagh, Dayabasti, Delhi-110035.
Laser Typesetting by Compu-Media,
95-C/UB, Jawahar Nagar, Delhi-110 007.

प्रथम संस्करणस्य

## भूमिका

मैथिलश्रोत्रिय-कुल-कमलदिवाकरेण काव्यसाहित्यपरिशीलनसमासादित-सूक्ष्मशेमुषीकेण राजकीयमुजफ्फरपुरसंस्कृतमहाविद्यालये ... प्रधाना-ध्यापकपदप्रसाधिना श्रीबदरीनाथ झा शर्मणा निर्मितमिद 'राधापरिणय' नामधेय महाकाव्यमालोक्य नितरां प्रमोदमनुभवामि ।

यत्र भगवत श्री १०८ कृष्णस्य प्रादुर्भावोत्सव समारभ्य श्री १०८ राधापरिणयगर्भ रासोल्लासावसान लीलात्मक चरितमालङ्कारिकेण संकेतेन समुपन्यस्तमस्ति । रसानुसारिणा छन्दसा रीत्या च रुचिराणि विद्यन्ते पदानि, अभिधया लक्षणया चाप्रधानवृत्त्या प्रतिपादिता पदार्था प्रायेण विच्छित्तिविशेषाधायिव्यङ्ग्यव्यञ्जकतया पदकदम्बकानीव गुणपदवीं नातिशेरते गत्यामपि महतामलङ्कृतीनाम्, कलाकलापेन परमेश्वरावतार श्री१०८कृष्ण प्रधान धीरोदात्तनायकः, नायिका च श्री१०८ राधा, मारस्तदधिष्ठातृदैवतकः, प्रबन्धस्य परे तु रसा पदवाक्यसर्गादीनां ध्वनेरध्वनि पथिकता दधाना अङ्गाङ्गिभावेन संगच्छन्ते । वृत्तन्तु पुराणप्रथितम्, आदौ नमस्कृतिः, खलनिन्दनम्, सद्गुणकीर्तनम्, हेमन्तादिशरदन्तानामृतूनां वर्णनम्, मन्तृतवर्गशान्तिम सर्गः, कुमारसम्भव इव चेतिवृत्तनाम्ना काव्यस्य, गीतगोविन्द इव च उपादेयकथानाम्ना सर्गाणां नामविधानम्, नूनमनावश्यकमपि यमकादिचित्रकाव्यं प्राचीनकतिपयमहाकवि-काव्यालोकनेनोपनिबद्धम् ।

यच्च खण्डवलाकुलकूपारकलाकरस्य कर्पूरपूरनिराकारिकीर्त्तेः धर्म्माचरणमे-ध्यमेधमानसमृद्धिशालिनो नयविनयवत श्रीचन्द्रधारिसिंहमहानुभावस्य साहाय्येन मुद्राणां मुद्रितमित्यसौ शरदांशतं जीवतादिति श्री१०८विश्वनाथमर्थयमानो वाग्विस्तराद्विरमति ।

हिन्दू विश्वविद्यालय, काशी
१५-१२-१९३१ ई०

बालकृष्ण मिश्रः
(महामहोपाध्याय)

# अभ्यर्थना

कादाचित्कविलासभाजि तरले विद्युन्निभे प्रातिभे
व्युत्पत्तावपि विप्रकर्षमधिकं स्वैरं श्रयन्त्या मुहुः ।
अभ्यासेन तनीयसाऽऽर्यवचसामुञ्छेन लब्धोदयं,
श्रव्यं काव्यमिदं, तदत्र सकृपैः प्राज्ञैस्त्रुटिः क्षम्यताम् ॥१ ॥
सन्त्यत्र त्रुटयो बुधा बहुविधा या दुःक्षमास्तत्समा-
धानाख्यानधुरा विरोधविधुरा सौहार्दवत्सिन्धुरा ।
आरोप्याद्य भवत्सु सत्सु सुतरां सारस्वते शाश्वते,
साम्राज्ये प्रभवत्सु निर्वृतिमिह निस्संशयं संश्रये ॥२ ॥
एतन्नैव चिरन्तसत्कविवचोरत्नप्रभालोकिनां,
काव्यं नव्यतमं भवेदनुपमप्रेक्षावतां प्रीतये ।
किन्तु प्रात्यहिकापचित्यनुभवद्भावे भवे सम्भवे-
देनेनापि विनोदनं ननु विदां केषाञ्चनोद्भाविनाम् ॥३ ॥
आयासे परमेतदेव कृतिनः स्वाभाविकी सौम्यता-
मद्धाऽऽसाद्य दृशंकयाऽपि विलसत्कारुण्यतारुण्यया ।
श्रीराधामधुसूदनप्रणयिनस्त्वच्चित्रलीलाऽञ्चितं,
भव्यं काव्यमदो निभाल्य सफलीकुर्युर्मदीयं श्रमम् ॥४ ॥
शाके रामशरद्विपक्षितिमिते १८५३ संवत्सरे भास्वरे
मार्गे मासि दलेऽमले फणितिथौ सौधाकरे वासरे ।
सम्राड्धर्मसमाजसंस्कृतमहाविद्यालये पूर्णतां
प्राप्ता कीर्तियशोमतीतनुजयोः प्रीतिं कृतिर्मे क्रियात् ॥५ ॥

इति विदुषां विधेयस्य कवेः
श्री बदरीनाथशर्मणः ।

# प्रस्तावना

संस्कृतसाहित्ये सुपरिचितानां कविशेखर बदरीनाथझा शर्मणा साहित्यशास्त्रीय-गम्भीरचिन्तनस्य वैष्णवभावनायाश्च परिणतिरूप राधापरिणयमहाकाव्यमिदम्। राधातत्त्वस्य सामाजिक-परिवेशानुकूल मानवीकरण समवतारितमत्र कविना। श्रीकृष्णस्य प्रादुर्भाव-बाल्यचरितशौर्य-ताराण्यालौकिकमहत्त्वादिना सहैव राधाकृष्णयो: परिणयोपन्यासो हि विशेषतश्चारित्रिकोत्कर्षाधायकोऽपिनिवेशितोऽत्र। सम्पूर्णेऽपि महाकाव्येऽलङ्कार-*बोधिनी टिप्पणी कविनैव निवेशिता, याऽस्यालङ्कारसम्पद प्रकटीकरोति।* प्रथमे सर्गे आद्यन्तमन्त्यानुप्रास प्रतिपद्य हृद्यतया निवेशितो, यो हि संस्कृतसाहित्ये विरल प्रयोग एव यथा-

अनूरु-रजको व्योमक्षौमादस्तं व्यधादलम्।
उषःप्रभाभरक्षारं समासज्य तमोमलम्॥

(राधापरिणय-१-९९)।

अत्रोप कालवर्णने वस्त्रप्रक्षालन-रूपकस्य चित्रण वर्तते। सूर्यसारथी रजकोऽत्र, आकाश हि वस्त्रम्। रात्रेस्तमस्तु मलम्, उष कालिकी प्रभा च क्षारमित्येव रूपक-माला वैलक्षण्येन कविना ग्रथिता। अन्त्यानुप्रासश्च भाषा-काव्यमिधाह्लादकारी।

अस्मिन् काव्ये प्रतिसर्गान्तं नैषधीयचरितमिव कवेः परिचयबोधक पद्यं निवेशितं, यत्र च क्वापि क्वापि सर्गान्ते कवेरपरकृतीनामपि सूचना प्राप्यते-

१. पञ्चमसर्गान्ते- दीधितिः ध्वन्यालोकव्याख्या।
२. षष्ठसर्गान्ते - सुरभि रसमञ्जरीव्याख्या।
३. अष्टमसर्गान्ते राजस्थानप्रस्थानम्।
४ दशमसर्गान्ते *काश्यपकुलप्रशस्ति (कवे. स्ववंशीयमहापुरुषाणां परिचय.)*
५. चतुर्दशसर्गान्ते गीतरत्नावली।
६. पञ्चदशसर्गान्ते प्रमोदलहरी (महाविद्याना स्तुति)
७. सप्तदशसर्गान्ते 'मञ्जूषा' अलङ्कारसर्वस्वव्याख्या *(अप्रकाशिता)*
८. अष्टादशसर्गान्ते गुणेश्वरचरितचम्पूः।

महाकाव्यस्यास्य रचयिता कविशेखरो बदरीनाथ "खौआल-सिमरवार" सञ्ज्ञके काश्यपगोत्रीय मैथिलश्रोत्रियकुले सरिसव ग्रामे (मधुबनी, बिहार) १८९३ ई. वर्षे जनिमलभत। विद्यानाथ-मायादेव्योः पित्रोः पुण्यनाथेन्द्रनाथ-रेवतीनाथ-बदरीनाथेति पुत्रेषु कनिष्ठोऽयम्। गुरवो ह्येतस्य सरिसवे पं विदेश्वर-

झा-प जनार्दन झा- प. मार्कण्डेय मिश्रा, दरभङ्गायां म. म. चित्रधर मिश्रा; मुजफ्फरपुरे च प. रविनाथ झा महोदयाः। १९१५ ई यावदस्याध्ययनकाल। एतत्सहाध्यायिषु प. त्रिलोकनाथ मिश्रा पं. महेशझा शर्माणश्च विश्रुतवैदुष्या आसन्। व्याकरण-काव्यतीर्थोऽयं १९२१ ई वर्षे भारत-धर्ममहामण्डलात् काश्यां कविशेखरोपाधि, संस्कृतविद्वत्परिषतोऽयोध्याया १९२९ ई. वर्षे साहित्यार्णवोपाधि, कामेश्वरसिंह दरभङ्गा संस्कृत विश्वविद्यालयत-१९६८ ई. वर्षे विद्यावाचस्पतिपदवीं च लब्धवान्। १९१६ वर्षे दरभङ्गास्थ-मिथिलेश-महाराजाधिराजप्रवर्तित-धौत-पाण्डित्य-परीक्षाया व्याकरणविषये सर्वप्रथमो जात। १९१६ ई त. १९४८ ई यावद् मुजफ्फरपुरस्थ धर्मसमाज संस्कृत महाविद्यालये साहित्य-प्रधानाध्यापक- पदे कार्यं कृतवान्, यत्रैतस्य प्रमुखशिष्या. प. सुरेन्द्रझा सुमन, प. रामचन्द्र मिश्र, कविचूडामणि काशीकान्त मिश्रो मधुप, डा. रामकरण शर्मा च अभूवन्। १९६५ ई त. १९६७ ई. यावद् दरभङ्गाया मिथिला-संस्कृत विद्यापीठे सम्मानित-प्राध्यापकरूपेण कार्यं कृतवान्। १९११ ई तः अस्य ग्रन्थाः प्रकाशिता उपलभ्यन्ते। अस्य रचनासु १५ मौलिक्य, ३ टीकात्मिका, ८ च सम्पादिताः संस्कृते, मैथिल्या च प्रकाशिता विद्यन्ते। तासु संस्कृते-

१ राधापरिणयम्, २ गुणेश्वरचरितम्; ३ अन्योक्तिसाहस्री ४ काव्यकल्लोलिनी, ५. ध्वन्यालोकदीधिति ६. रसमञ्जरी-सुरभिः ७ रसगङ्गाधरचन्द्रिका ८ साहित्यमीमांसा, ९ काश्यपकुलप्रशस्तिश्चेति मुख्या सन्ति।

मैथिलीभाषायामप्यनेन १ एकावलीपरिणय-महाकाव्यम्, २ मैथिली काव्यविवेक (काव्यशास्त्रम्) इत्यादयो ग्रन्था रचिता।

१९६२ ई वर्षे दरभङ्गायाम् अस्मै कविशेखर-पुष्पाञ्जलि नाम-कोऽभिनन्दनग्रन्थ समर्पित। साहित्य-अकादेमी-देहलीत. मैथिलीभाषाया-मेतत्परिचयात्मको ग्रन्थ. 'बदरीनाथ झा', नामक. प्रकाशितो, यस्य लेखकोऽस्ति-डा. दुर्गानाथ झा श्रीशः (१९८७ ई)।

कविशेखरोऽसौ १९७३ ई वर्षे काशीलाभ कृतवान्। साम्प्रतं तदाश्रमे सरिसवग्रामे तत्पुत्र. प श्री गोलोकनाथ झा(वाणीझा) पुत्रादिसंवलितो विराजते।

एतस्य जन्मशताब्द समारोहावसरे १९९३ ई वर्षे सरिससवग्रामे 'कविशेखर ग्रन्थावली प्रकाशन समिति,' सङ्गठिता जाता। तस्या. प्रयासेन एतत्कृत मैथिली-काव्यविवेक ग्रन्थस्य प्रथमवार प्रकाशनं १९९४ ई वर्षे जातम्। तदनु तत्प्रयासैनैव प्रस्तुतस्य महाकाव्यस्य द्वितीयवारं प्रकाशन जायते। इत पूर्वं १९३१ ई वर्षे रांटी-(मधुबनी) नगराधीश बाबू चन्द्रधारि सिंह शर्मणा द्रव्यसाहाय्येन मुजफ्फरपुरतोऽस्य

प्रस्तावना

प्रथम संस्करणं जातमासीत्। ततो बहुवर्षानन्तर स्वयं कविशेखरमहोदयेन मुद्रितपुस्तके स्वलेखन्या यत्र तत्र संशोधन- परिवर्तनादि विधाय प्रकाशनाय प्रयासो विहित., परं प्रकाशन न जातम्। साम्प्रत तत्पुत्र श्रीगंगालोकनाथ- झा पूर्वोक्त प्रकाशन समितेरनुरोधेन ग्रन्थकर्तृसशोधित तत्पुस्तक मह्यं सम्पादनाय प्रदत्तवानिति सर्वप्रथममत्र स महानुभावो धन्यवादभाजनम्। तदाधारेण मया महाकाव्यमिदं यथोचितरूपे प्राकाश्य नीयते।

राधापरिणयमहाकाव्यस्य मुद्रणादिव्ययसाहाय्य विधाय नवदेहलीस्थ-राष्ट्रियसस्कृतसंस्थानस्य निदेशका:, डॉ. कमलाकान्त मिश्र महोदया· धन्यवादार्हा सन्ति। तान् प्रति कृतज्ञतां व्याहरन् विरमामि।

दीपग्राम-
१-८-१९९७ ई.

डॉ. शशिनाथ झा
स्नातकोत्तर व्याकरण विभागः,
का. सिं. द. सस्कृत विश्वविद्यालयः दरभङ्गा



## संक्षिप्ताक्षरसंकेतः

| | | |
|---|---|---|
| अति० | — | अतिशयोक्तिः |
| अत्य० ति० वा० | — | अत्यन्त तिरस्कृत वाच्यध्वनि. |
| अनु० | — | अनुप्रासः |
| अ० न्या० | — | अर्थान्तरन्यासः |
| अप० | — | अपह्नुति / अपराङ्गध्वनिः |
| अ० प० | — | अर्थापत्ति. |
| अर्था० | — | अर्थान्तरन्यास, अर्थापत्तिः |
| अर्थाप० | — | अर्थापत्ति |
| उप० | — | उपमा |
| उत्प्रे० | — | उत्प्रेक्षा |
| का० मा० | — | कारणमाला |
| का० लि० | — | काव्यलिङ्गम् |
| ध्व० | — | ध्वनि. |
| निद० | — | निदर्शना |
| पुन० | — | पुनरुक्तवदाभास. |
| प्रति० | — | प्रतिवस्तूपमा |
| भ्रान्ति० | — | भ्रान्तिमान् |
| यथा० | — | यथासङ्ख्यम् |
| यम० | — | यमकम् |
| रू०, रूप० | — | रूपकम् |
| रूपका० | — | रूपकातिशयोक्तिः |
| व० | — | वस्तु |
| वा० | — | वाच्यम् |
| विरो० | — | विरोधाभासः |
| व्यति० | — | व्यतिरेक. |
| समा० | — | समासोक्तिः |
| समु० | — | समुच्चयः |
| सहो० | — | सहोक्तिः |
| स्वभा० | — | स्वभावोक्तिः |

# राधापरिणयमहाकाव्यस्य विषयसूची




॥ श्रीराधाकृष्णाभ्यां नमः ॥

# राधापरिणय[1]-महाकाव्यम्

## मङ्गलम्

श्रिया श्रित सदातन्या व्यङ्को वियुतशन्तम ।
कोऽप्युद्यन् हृद्दिरौ भिन्द्यादिन्दुर्मे मन्दतातम[2] ॥१ ॥
निश्श्रेयसाय जगतो नियत मिलितौ व्रजे ।
सौदामनीघनौ राधाकृष्णात्मानौ सदा भजे[3] ॥२ ॥
भगवद्भक्ति-सुमन स्रवन्ती-हिमभूधरम् ।
दयामन्दिरमानन्द वन्दे बालेन्दुशेखरम्[4] ॥३ ॥
प्रतिभाविद्युदभालि कीर्तिवेणीसरस्वतीम् ।
सदासन्निहितामास्ये नमस्यामि सरस्वतीम्[5] ॥४ ॥
विघ्नेशमपि विघ्नारिं चतुर्बाहु गणाधिपम् ।
स्मराम्यनादिमप्यादिं त निश्वगणि द्विपम्[6] ॥५ ॥
श्रयामि शिष्यधीनिद्रामुद्राविद्रावणायणम् ।
श्रीमद् गुरुपदाम्भोजमकरन्दपृषद्गणम्[7] ॥६ ॥
उद् धृतं श्रुतिपाथोधे येन भागवतामृतम् ।
कस्मैचन[8] चिरं तस्मै मुनयेऽस्तु नमस्कृतम् ॥७ ॥

---

१. शर्धनिरस्ततमसं तन्वी प्रकृतिसन्निभाम् ।
तनोति-'बदरीनाथो' राधापरिणयप्रभाम् ॥१ ॥
राधाया राधाकर्मको वा परिणयो यत्र । तद्वर्णनेन व्यभिचारशङ्कानिवर्तनमस्य सन्दर्भस्य फलं, श्रीराधा नायिका श्रीकृष्णो नायक, शृङ्गारो रस प्रधानम् पुराणेतिहासप्रसिद्ध वृत्तमित्यादि महाकाव्यलक्षणमगतये द्रष्टव्यम् ।
२. श्रुतिवृत्त्यन्त्यानुप्रासयमकसंसृष्टोऽतिशयोक्तिरूपकानुप्राणितो व्यतिरेकोऽलङ्कारः वस्तुनो रतेर्भावस्य च ध्वनि । सर्गेऽस्मिन्नुपान्त्यं यावदनुष्टुप्छन्दः ।
३. अपह्नुतिकाव्यलिङ्गानुप्रासा ।
४. का लि अनु. ।
५. पूर्ववत् ।
६. पूर्ववत् । विरोधाभासश्च ।
७. का लि. अनु. ।
८. अनि.का लि अनु । न्यासाय शुकाय वा ।

नौमि प्राचेतसप्रायान्[१] प्राचस्तानप्यनारतम् ।
यद्भारती-सुधाधाराधौतमद्यापि भारतम् ॥ ८ ॥
प्रभूतसुकृतोद्धृतप्रत्यासन्नविपद्व्रजम् ।
प्रणमामि मुहुर्मातापित्रो-[२] श्चरणपङ्कजम् ॥९ ॥

## उपोद्घातः

मथिलो[३] वदरीनाथ स्मरन् प्राक्कल्पनाविधाम् ।
तनोमि कवितामेतां राधापरिणयाभिधाम् ॥१० ॥
[४]सुवर्णाऽप्यन्तरेण श्रीगोविन्दगुणवर्णनम् ।
आपातरमणीया यद् वाणी वेश्यानिदर्शनम् ॥११ ॥
तदेतद् राधिकाकृष्णस्तवगौरवमण्डितम् ।
पद्यप्रसूनपटल[५] प्रसादयतु पण्डितम् ॥१२ ॥
दीव्यत्सु दिव्यकाव्येषु मयाऽप्येतद्वितन्यते ।
पारावारेषु पूर्णेषु पल्वलं किं न खन्यते[६] ॥१३ ॥
पावनी तापशमनी स्वभृता श्रेयसी तथा[७] ।
भागीरथीव सत्सेव्या क्व ? भाति भगवत्कथा ॥१४ ॥
क्वा ऽह चाप्रतिभः काव्ये वर्णयामि तथापि ताम् ।
आशास्य सेवकारब्धसिद्धौ तदनुकम्पिताम्[८] ॥१५ ॥
प्राज्ञोक्तिभ्योऽधिकं प्रेयो यथा शिशुकलोदितम् ।
श्रुतेभ्योऽपि तथेशाभ्यां[९] स्वदतां मदुदीरितम् ॥१६ ॥

१ प्रमुखार्थकः प्रायशब्द । का. लि., अनु ।
२. ज्ञीपाख्यश्रीमद्विद्यानाथशर्मश्रीमायादेव्यो । पूर्ववत् ।
३ मिथिलायां दरभङ्गामण्डलान्तर्गत-'गरिमत'-ग्रामेमयुत्पन्न'। प्राचीनप्रकारस्मृत्या क्वचित्प्रवादेऽपि न क्षति, यद्यपि काव्येऽत्र प्रतिरथमलंकारादिरस्ति, किन्तु प्रन्थगौरवभियाऽत्र पर नवीनस्यैव तस्योल्लेख ।
४ गुरुणा स्वश्रुत चेनिच्छयाश्लेष ।
५ समूहम् ।
६ दृष्टान्त । धर्मद्वयेस्याद्गीकार तु प्रतिवस्तूपमा ।
७ पूर्णोपमा ।
८ विषमविभावने ।
९. श्रुतेभ्य शास्त्रेभ्य । ईशाभ्यां श्रीराधाकृष्णाभ्याम् । श्रौत्युपमा ।

 

प्रबन्धोऽयं सदोषोऽपि प्रगुणोऽर्चतु पश्यत.[१] ।
प्राणातीक्षु कठोरोऽपि मधुरो न किमश्नतः ॥१७॥

## श्रीसार्वभौमस्य शुभाशंसनम्, विशेषकम्ः-

महाविद्यालये[२] यस्माद् गृह्णन् वृत्तिमिवादरम् ।
अध्यापयामि सानन्द छात्रवृन्दं निरन्तरम् ॥१८॥
विपक्षपक्षनिक्षेप-प्रतिपत्तिधुराधुव ।
पूर्वापराब्धिमर्य्यादं[३] स शासन्मण्डल भुव ॥१९॥
प्रथमोऽपि[४] नयज्ञानागुन्नयन् साधु भारतम् ।
पञ्चम श्रीयुतो "जार्जो" जीव्याद्दिव्यसमाश्शतम् ॥२०॥

## श्रीमिथिलेशस्य शुभाशंसनम्, विशेषकम्ः-

न धत्ते केवल यो मद्वाञ्छितार्पणवीरताम् ।
किन्तु मत्पूर्वजाराध्यद्विजवश[५]-करीरताम् ॥२१॥
धर्म्माधार. स्मराकार: करुणावरुणालयः ।
मिथिलापृथिवीनाथः सनाथः प्रज्ञया च य· ॥२२॥
श्रीरमेश्वरसिंहोऽव्यादिष्टपूर्तं स पावनीम् ।
सदाऽरिवारणव्रातनिपातनिपुणोऽवनीम्[६] ॥२३॥

## दुर्जननिन्दा, कुलकम्ः-

निर्दोषानपि[७] सत्पुंस. सविकारा महाबला· ।
प्रदर्शयन्ति ये दुष्टान् मूलप्रकृतिवत्खला. ॥२४॥
परापवादश्रवणमननादि[८]-जुषो जवात् ।
नासादयन्ति निर्वाणं येऽद्भुत विधित्रैभवात् ॥२५॥

---

१. दृष्टान्तः ।
२. मुजफ्फरपुरे मिथिलायाम् धर्मसमाजसंस्कृतमहाविद्यालयनामनि ।
३. कराचीमारभ्य ब्रह्मदेश यावत् ।
४. विरोधाभास. ।
५. श्लिष्टरूपकम् ।
६. रूपकयमके
७. प्रकृति. कर्त्री, पुरुषस्तु पुष्करपलाशवन्निर्लेप इत्याद्यनुसन्धेयम् ।
८. निदिध्यासनसाक्षात्कारादिपदयोर्ध्यौ । मुक्तिनाशौ निर्वाणशब्दार्थौ । विभावना ।

सत्कुर्वन्ति महान्तोऽपि यान्मृषाख्यातदूषणा.[1] ।
यैर्भुजङ्गैरिवाभ्यस्त. परच्छिद्रगवेषणा ॥२६ ॥
न रोचते गुणो येभ्य· कौशिकेभ्यो यथाऽशुमान् ।
येभ्यो बिभेति सौलभ्या द्विपदो भूरिभूतिमान् ॥२७ ॥
सतामिव समावृत्तिर्येषा सुहृदमित्रयोः ।
स्वेहिते नियमेनैवं प्रवृत्ति स्तुतिनिन्दयो· ॥ २८ ॥
नरेन्द्रानोपधीमन्त्रवतो दशति चञ्चला ।
अस्पष्टविग्रहा येषां रसनाऽऽशीविषावला ॥२९ ॥
ध्रुव विफलताधत्ते येषु राज्ञोऽपि शासनम् ।
जडधोष्विव शिष्येषु गुरोस्तत्त्वप्रकाशनम् ॥३० ॥
तैरेव वन्दितैः पूर्वं विस्मरद्भिरनार्यताम् ।
दोषान्वेषकृतेऽपीह स्वदृष्टिरवताय्र्यताम् ॥३१ ॥

## सज्जन-प्रशंसा, युग्मकम्ः-

न स्तुतिर्मनसो मोद, न निन्दा विक्लव तथा ।
प्रसूते, प्राकृतैर्येषामचिन्त्येन गति. पथा ॥३२ ॥
उञ्छन्त.[2] परकृत्येषु प्रयस्यापि गुणान् परम् ।
ते धूतमत्सरा. सन्त प्रणम्या. कैर्न निर्भरम् ॥३३ ॥

## कथोपक्रमः, गोकुलवर्णनम्, कुलकम्ः-

अस्ति स्वस्तिशतख्यातं, महामङ्गलमण्डनम् ।
पुरन्दरपुरी-सम्पत्सौन्दर्य्यमद-खण्डनम्[3] ॥३४ ॥
गोलोकमिव निर्द्वन्द्वं, नगवृन्दमिवाचलम् ।
बलिसद्मेव[4] वस्वाढ्यं पतिस्वान्तमिवामलम् ॥३५ ॥
त्रिविष्टपमिव श्लाघ्य, वीरवर्मेव दुर्दमम् ।
शैलशृङ्गमिवालङ्घ्यं, विमानमिव शन्तमम् ॥३६ ॥

१. मृषाख्यातानि दूषणानि येषाम् ।
२. धनराशिदाना । परिचर. ।
३. निदर्शना । अस्मोत्यस्य गोकुल कर्तृ ।
४ इतो माला-पूर्णोपमा ।

मणिद्वीपमिवोदग्रं, ब्रह्माण्डमिव वर्तुलम् ।
वृन्दावनमिवानिन्द्यं, वैकुण्ठमिव निस्तुलम् ॥३७ ॥
कैलासहासकुशलं, नन्दनश्रीसमर्चितम् ।
धुतचैत्ररथस्पर्द्धं[1] साकेतसुषमाश्रितम् ॥३८ ॥
विलासोपवनं लक्ष्म्या वाग्देव्या विश्रमाङ्गनम् ।
कल्याणानां कुलागारं कौतुकानां निकेतनम्[2] ॥३९ ॥
मलयोऽर्थपटीरस्य, धर्मेन्दोः क्षीरवारिधिः ।
मानसं कामहंसस्य, मोक्षरत्नस्य शेवधिः ॥४० ॥
अकृष्णं विलसत्कृष्णं सदुद्धवमनुद्धवम् ।
विशालं भूरिगोशालं, सदानवमदानवम्[3] ॥४१ ॥
अक्षयं क्षयसंवीतं, वनीस्थमवनीस्थितम् ।
निःखलं खलसंकीर्णं, गोचितं च नगोचितम्[4] ॥४२ ॥
सूचगन्धगवल्लीलां स्वच्छन्दानन्दगोकुलम् ।
कृष्णारोधसि गोपानां पुरमप्यपि गोकुलम् ॥४३ ॥
कार्कश्यं स्तब्धता यत्र स्तनेषु नवयोषिताम् ।
द्विजिह्वता भुजङ्गत्वं, गणेषु च[5] फणावताम्[6] ॥४४ ॥
क्रूरता गह्वरे[7] शैले, भ्रमो भङ्गः सरिज्जले ।
वियोगः कुञ्जनिर्वृक्षे, सन्तापो रुक् तथाऽनले ॥४५ ॥
शिखासु केवलं बन्धस्तमिस्रासु परंतम ।
कुल्यासु जीवनध्वंसः प्रमदासु च विभ्रमः[8] ॥४६ ॥

---

१. इतो निदर्शना ।
२. इतो रूपकाणि
३ इतो विरोधाभासः । कृष्णा, यमुना उद्धव उत्सवो यादवश्च । मदा नवम् ।
४ क्षयो गृहम् । गोभिश्चितं व्याप्तम् । नगेनोचितं संसक्तं चिरानुगतं वा । तथा च "उचितन्तु स्वभावेक्तौ निश्चिताभ्यस्तयोः पुनः । नियुक्तेऽनुमते चापि प्रोक्तवान्सकटायनः । योग्ये चिरानुयाने च" इति केशव ।
५. यमकम् ।
६. इत आर्ष्यं परिसङ्ख्याः । स्तब्धतौत्रत्य दर्पश्च । द्विजिह्वता पैशुन्यम् । भुजङ्गत्वं विटत्वम् ।
७. गह्वरो गुहा दम्भश्च । भ्रमो जलभ्रमोऽपि । भङ्ग ऊर्मिपराजयौ । वीनां पक्षिणां योगेऽपि वियोगः । कुत्सिता, कोऽश्विनेश्च जनिः कुजनि । रुक् कान्तिरोगौ ।
८. विभ्रमः शृंगारचेष्टा । पक्षे विशिष्टोभ्रमः ।

पशूना[1] वलजाशक्ति, मन्दता मातरिश्वनाम् ।
पञ्चत्वं कामबाणानां लघीयस्सेवनं शुनाम् ॥४७॥
अविचारो[2] दिनेष्वेव, द्रुमेष्वेव पलाशिता ।
पेचकेष्विनविद्वेष, काकेषु कटुवाशिता ॥४८॥
वञ्चनग्रहिलाभांगां, स्तेय प्रणयिचेतस. ।
दमन तरलाक्षाणां स्तम्भन वतिरेतसः ॥४९॥
वारुणी[3]-निरतिश्चन्द्रे, मालिन्यं यमुनाजले ।
अर्ति शरासने ऽरिष्टं दधि, कूटं तथाऽचले ॥५०॥
वक्रता कविवाणीनां, श्वापदानामहम्मतिः ।
भिदाऽभ्यन्तरचक्राणां सलिलानामधोगति· ॥५१॥
लोलता शफरीष्वेव, वनितास्वेव वामता ।
व्यालता दन्दशूकेषु,[4] सर्ववेदस्सु नि स्वता ॥५२॥
दण्डिषु स्वपरित्यागो, भृङ्गेषु गणिकाऽऽश्रयः ।[5]
नायकाध स्थिति हारे, सिन्धावुत्कलिकाचय· ॥५३॥
समाध्यन्ते[6] क्षणक्षेप, श्छन्दसि क्षुद्रवृत्तता ।
सायमोज क्षयो भानो, जवाद्विदुषि वृद्धता ॥५४॥
आशोभङ्गो[7] भुजङ्गालो, निदाघे वसतिक्षयः ।
चैलत्वं परिधानीये रोहिण्यां बहुलात्यय· ॥५५॥

१ वलज दृगम्, वलजा तरुणी ।
२. अर्त्ते सूर्यस्य चारे गतिः । 'अविर्नाथे रवौ मेषे' इति मेदिनी । पलाशिता पत्रवत्त्व मांसाशित्वं च । पेचका उलूकाः । इनः सूर्यः प्रभुश्च ।
३ वारुणी प्रतीची दिक् सुरा च । अर्तिः पीडा कोटिश्च । अरिष्टं मृत्युचिह्नं तक्रं च । कूटं छलं शृङ्गञ्च ।
४. शफरी मत्स्यविशेषः । व्यालता खलत्वं च, सर्ववेदा यज्ञे दत्तसर्वस्वदक्षिणः ।
५. स्वस्य धनस्यात्मनश्च च । गणिका यूथिकाऽपि । नायको मध्यमणिश्च । उत्कलिकोत्कण्ठा तरङ्गोत्करोऽपि ।
६. क्षण उत्सवो निर्व्यापारस्थितिश्च । वृत्तमाचारश्च ।
७ आशा दुराशा दिशा च, वसतिर्निलयो यत्र च । चैलत्वं नीचता च । बहुला गौः कृष्णपक्षश्च ।

कालिन्द्या यत्र कल्लोलैराघृष्ट. सौधसंचयः ।
अस्त्याप्तकामिनीबाहुश्लिष्टकामिसमुच्छ्रयः[१] ॥४६ ॥
स्पृष्टं दृष्टमदृष्ट च फल सुरभिवद्ददत् ।
कुण्डोधो धेनुकं यत्र सदानन्द[२]-मनन्दयत् ॥५७ ॥

## श्रीवृषभानु-नन्दवर्णनम्, कुलकम्:-

आसीत्तत्र व्रजाधीशः शार्ङ्गीव यशसाऽमल. ।
सदागतिरिवोर्जस्वी, विभावसुरिवोज्ज्वल. ॥५८ ॥
यक्षराडिव लक्ष्मीवान्, वृषेवारिभयावहः ।
शशीव जगदानन्द· सवितेव तमोऽपहः ॥५९ ॥
उशनेव नयाभिज्ञो, वृहस्पतिरिव प्रधी ।
प्रजापतिरिव ज्यायान्, पिनाकीव दयाऽऽर्द्रधीः ॥६० ॥
सरस्वानिव गम्भीर· शिखरीव सदोन्नत. ।
समवर्तीव समदृग्, विटपीव क्षमारतः ॥६१ ॥
कलावत्य[३]ब्जिनीभानु र्वृपभानुस्तथाऽपरः ।
"नन्दो" "यशोमती" -प्राणवल्लभो वल्लवेश्वरः ॥६२ ॥

## श्रीराधोत्पत्तिवर्णनम्, विशेषकम्:-

प्राक् प्रसूतिप्रजापत्योरिव विश्वप्रसूः सती ।
जनयित्रोरतपोराशिं सार्थयन्ती परं सती ॥६३ ॥
वात्सल्यामृतसद्रूपणी भक्तेह्यकल्पवल्लरी ।
गोलोकसरसीहंसी, त्रैलोक्यभवनेश्वरी ॥६४ ॥
वृपभानोः स्वयं "राधा" कलावत्यां कलावती ।
आविरासीत्तुषाराद्रे मेनायामिव पार्वती[४] ॥६५ ॥
सीतामिव विदेहेन्द्रः कमलामिव सागर. ।
तां जगज्जननीं जानन् सुतां मेने व्रजेश्वरः ॥६६ ॥

---

१. निदर्शना ।
२. सदानन्दनामा गोपोऽपि ।
३. वृषभानू राधायान्नन्दस्तु कृष्णस्य पिता। कलावती कीर्त्तिदेति भानुपत्न्याः, यशोमती यशोदेति च नन्दपत्न्या नामद्वयम् ।
४. भाद्रे शुक्लाष्टम्यां मध्याह्ने, यज्ञभूमौ ।

वर्षर्तुरिव मेघाल्या, वन्येव कुसुमश्रिया ।
कोकिलेव च काकल्या, जननी शुशुभे तया ॥६७ ॥
कादम्बिनीव शिखिनी, चकोरीमिव चन्द्रिका ।
भृङ्गीमिव वसन्तश्री- स्ताभ्रीणाच्च राधिका ॥६८ ॥
जगद्विलक्षणादन्यच्छायाव्यतिकराऽञ्जसा ।
ववृधे चित्रयन्त्यन्यांश्छ्या सायन्तनीव सा ॥६९ ॥
विलोक्य लोकस्तद्रूपसमृद्धिमतिनूतनाम् ।
रतीन्द्राणीविनिर्माण मेने धातु र्विडम्बनाम्[१] ॥७० ॥
पितृभ्यां पुत्रिका[२] पौरैश्चन्द्रिका श्री प्रवेदिभि ।
चन्द्रावल्या परा, शस्या वयस्या ललितादिभि. ॥७१ ॥
काञ्चनी कदली चित्रा स्थिरा सौदामनी लता[३] ।
जल्पिनी कोमला रत्नप्रतिमा सा जनैर्मता ॥७२ ॥
न केवल सा पितरौ, किन्तु सर्वान् व्रजौकस. ।
राधाऽप्ताधारणैश्चक्रे गुणै र्नन्दितचेतस ॥७३ ॥
अवतेरु वियोगाधे र्भीरवश्चिरसम्पृच. ।
तदालितनवो लीलाच्छन्दसश्छन्दसापृच[४] ॥७४ ॥

## श्रीकृष्णोत्पत्तिवर्णनम्:-

पुत्राभावेन सम्पत्तिरपि तं विश्वतोमुखी ।
अदुनोदेव घोषेश गृही क[५] सर्वथा सुखी ? ॥७५ ॥
व्यधीयत विषादेन स तेन विकलो वशी ।
पक्षेण बहुलेनेव पूर्णापूर्णकल शशी ॥७६ ॥
परन्तु सहताभार्ति भक्तस्य भगवान् कथम् ॥
चकार फलिन सद्यस्ततस्तस्य मनोरथम् ॥७७ ॥

१ प्रतीपम् ।
२ उल्लेख ।
३. व्यतिरेकपोषितोल्लेख. ।
४. आगवत्रास्तत्मव्य इति पुराणम् ।
५. अर्थान्तरन्यास ।

करिष्यन्[१] रुचिरैश्चित्रैश्चरित्रै भक्तसम्पदम् ।
हरिष्यन् प्रभुताजातमुच्चैर्देवौकसम्पदम् ॥७८ ॥
शाश्वतं धर्म्ममुद्धर्तुं स्मरन्नवनिदेवनम् ।
सुखेन सफलीकर्तुं "यशोदानन्द" सेवनम् ॥७९ ॥
असत्तमोऽवसादाय कलिभूकार्तिवृद्धये ।
सत्सरोजप्रसादाय सुरचक्रसमृद्धये ॥८० ॥
सुभानि दिवि वर्षन्त्या दुन्दुभौ ध्वनति स्वयम्[२] ।
उत्सीदति तमस्तोमे सोमे याति नवोदयम् ॥८१ ॥
इष्टसिद्धाविवामोद प्रावृषीव घनोच्चय. ।[३]
सुकृताविव सन्तोषो नीताविव समुच्छ्रय. ॥८२ ॥
उषायामिव मार्तण्ड प्राच्यामिव कलाकरः ।
निशीथे नन्दभार्यायां प्रादुरासी[४]द्गदाधर ॥८३ ॥
आविरासन् द्विपद्व्यूहशल्यूहशमितौजस. ।
सहैव तेन गोपालबालरूपा दिवौकस. ॥८४ ॥
ववौ स्पर्शसुखो वायुः सुननाद घनस्तदा ।
दिदीपे दक्षिणो वह्निः भूर्वभूवातिसम्मदा ॥८५ ॥
सम स्वान्तेन साधूनां प्रसादादभितो जलम्[५] ।
भाग्येन सह नन्दस्य भयौ नक्षत्रमण्डलम् ॥८६ ॥
प्रसिद्धाः पञ्चमोल्लासे रासिद्ध. किन्नरा जगुः[६] ।
तन्वन्तश्च सुमासारं सुरा वन्दारुतामगु ॥८७ ॥
ममौ न सम्मद· शश्वत्खलवृन्दक्षतौजसाम्[७] ।
पातालवासिभि सार्कं मानसेषु दिवौकसाम् ॥८८ ॥

१. कुलकम् । प्रादुरासीदिति क्रियया सम्बन्ध । श्रीराधाकृष्णयो· प्रादुर्भावस्तु प्राकट्यमात्र-मिवेति कृष्णजन्मखण्डराधाजन्मादौ स्पष्टम् ।
२. समुच्चयः ।
३ पूर्णोपमा वस्तुध्वनिश्च ।
४. प्रादुर्भाव· प्रकाशमात्रम्, ईश्वरस्याजन्यत्वात् ।
५ महोक्ति·समुच्चयौ ।
६. परिकरसमुच्चयातिशयोक्तय. ।
७ अधिक·परिकरौ ।

अपूरि महसाऽऽकाश जयशब्देन दिक्कुलम् ।
महानन्देन नन्दान्त र्महोल्लासेन गोकुलम् ॥८९ ॥
ससाम्राज्यागमो भिक्षो र्मरोश्च सलिलाप्लव ।[१]
वर्षीयसोऽपि नन्दस्य यस्तनूजभवोत्सव ॥९० ॥
आनन्दजलधौ नन्द स पूर्व मग्नता गत ।[२]
शुभ्राश्रुपरीताक्ष सुतजन्मोत्सव तत ॥९१ ॥
अयमिन्द्रमणि किंस्विदाहो कुवलयाकर ।[३]
मञ्जुलो नु तम स्तोम किवा बालपयोधर ॥९२ ॥
इति गोविन्दमालोक्य सन्दिहानो तदायतौ ।
दम्पती चेष्टया बालं निराचेष्टां चिरायतौ ॥९३ ॥
यशोदा चारु पश्यन्ती सुताननकुशेशयम् ।[४]
सस्मार स्मितधौतास्या पार्वणेन्दो सविस्मयम् ॥९४ ॥

## निशान्तवर्णनम्:-

समग्र वीक्ष्य नन्दस्य, सौभाग्य भूरिमत्सरा[५] ।
किं कृशाऽभून्निशा कृष्णा, तद् व्याहन्तुमनीश्वरा ॥९५ ॥
क्षयन्ती वीक्ष्य ता नून विच्छायोऽभून्निशापति ।[६]
प्रियाऽनुवर्तनप्राया विचित्रा कामिना गति ॥९६ ॥
तद्विप्रयोगसन्तापाद्वान्छत्येव लय विधौ ।[७]
पतिव्रता पुरस्तारा निममज्जु पयोनिधौ ॥९७ ॥
कृष्णचन्द्रपरामर्शाद्दिग्भिस्त्यक्त तमो महत् ।[८]
कृष्णा करुणया त्रानुमिवाम्बुच्छद्मनाऽवहन् ॥९८ ॥

१ निदर्शना ।
२ अतिशयोक्ति ।
३ सन्देह ।
४. स्मरणम्, अत्यन्ततिरस्कृतवाच्यध्वनिश्च ।
५ उत्प्रेक्षापरिकरौ ।
६. उत्प्रेक्षाऽर्थान्तरन्यासौ ।
७ परिकर ।
८ रूपकोत्प्रेक्षे ।

अनूरुरञ्जको व्योमक्षौमादस्त व्यधादलम् ।[1]
उषः प्रभाभरक्षार समासज्ज्य तमोमलम् ॥९९ ॥

पूर्वं तमोदाहपरिग्रहार्ता
भाग्यादवेत्याच्युतजन्मवार्ताम् ।
आशाः स्फुटान्तः स्फटिकावभासाः[2]
स्वात्मप्रकाशान्महिमानमूहुः ॥१०० ॥

यशोमत्या शुक्तावजनि रजनौ मौक्तिकमणिः
श्रिया कृष्णो दैवादिति पशुपभृद्वाचिकमिव ।[3]
व्रजे भ्रामं भ्रामं मुदितमविराम कलकल-
च्छलेन प्रत्यूषे प्रतिपदमवोचन्त विहगाः ॥१०१ ॥

## सर्गसमाप्तिश्लोकः :-

अय 'माया देवी' सुकृतिपटलीमौलिमहित-
प्रथी 'विद्यानथ' प्रभव 'बदरीनाथ' रचित. ।
अगादाद्य· सर्ग परिणतिमतीतेतरकथा-
प्रथारलाघ्यो 'राधापरिणय' महाकाव्यघटकः ॥१०२ ॥

*इतिश्रीराधापरिणयमहाकाव्ये कृष्णाङ्के श्रीभगवत्प्रादुर्भावो नाम प्रथमः सर्गः सम्पूर्णः ॥*

१. सांगरूपकम् ।
२. पुनरुक्तवदाभासानुप्रासच्छायाश्लेषपरिकरा इन्द्रवज्राच्छन्दः ।
३. रूपक-वाच्यप्रतीयमानोत्प्रेक्षा । इत शिखरिणीवृत्तम् ।

*॥इति प्रभाया प्रथम· सर्ग सम्पूर्ण ॥*

# अथ "जन्मोत्सव-समारम्भो" नाम

## द्वितीयः सर्गः

अथ पूर्णवसु निशापति[1] र्वत चक्रस्य निरागसो द्विषन् ।
उचित परिगृह्य वारुणीं प्रियदोषोऽच्यवताञ्जसाऽऽस्पदात् ॥१ ॥
निहितो विधिनाऽम्बरासने [2] जगदानन्दयितेति चन्द्रमा ।
विरहिव्रजतापन चरन् न चिरात्किं पुनरेष पातित ॥२ ॥
उत[3] कोकवधूवियोजनस्फुरदहोमलिनीकृताकृति ।
तदपाकरणाय सत्वर पुलिन नीरनिधेरगाद्विधु ॥३ ॥
चपल कुटिल कलङ्कवानयलोत्तापनकृत्यदोषरुक् ।
प्रभवेद्यदि सर्वदा शशी[4] जगदेव स्नमित तदा भवेत् ॥४ ॥
सुषमानिधिरद्वितीयतास्थिरसाम्राज्यमितश्चिराद्विधु ।
विजितो[5] व्रजसुन्दरीमुखं र्नभसोऽपत्रपया पलायित ॥५ ॥
अभिसारनिवारक शुचि द्विजराज सुखयन्नपि प्रजा ।
निरकासि पदादसशय[6] महती सत्सु विधे कदर्थना ॥६ ॥
विलय स्वयमन्वगात्तमीमपयान्तीमवलोक्य यतम ।
उचित तदृतेऽवलम्बना[7] दसत कस्य निरामया स्थिति ॥७ ॥
अपराङ्कमुपेत्य वल्लभ विलसन्त शशिन निरीक्ष्य सा ।
प्रथमा दिगपास्ततारका[8] सहसा शोणमुखी बभूव किम् ॥८ ॥
परिणाममशोभन पर प्रथयन्त्योऽविनयस्य सर्वथा[9] ।
निशि सुश्रियमाप्य गर्विता, कुमुदिन्या ययुरापदं प्रगे ॥९ ॥

१ समासोक्तिकाव्यलिंगे । इत १०४ श्लोक यावत्सुन्दरीच्छन्द ।
२ विषमोत्प्रेक्षाकाव्यलिगानि ।
३ उत्प्रेक्षासन्देहौ ।
४ अतिशयोक्ति ।
५ गम्योत्प्रेक्षापरिकरौ ।
६ अर्थान्तरन्यास ।
७ अर्थान्तरन्यास ।
८ उत्प्रेक्षा ।
९ निदर्शना ।

दधतः किल कान्दिशींकता[1] तमसो विश्वजुषोऽप्युषोमुखे ।
शरणं समभूत्कुशाऽटवी मितमप्यार्पदि नृतये पदम् ॥१०॥
मिततारकमोषसप्रभाच्छुरितं[2] वासवदिङ्मुखं सुखम् ।
तनुशेषविशेषकं रुचा व्यहसन्मानवदङ्गनामुखम् ॥११॥
पतिभिः पथिकैर्नवागतैरुपगूढाः प्रमदा वियोजयत् ।
यदकृत्यमथादहर्मुखं[3] न चिरं तत्किमदर्शयन्मुखम् ॥१२॥
विरहार्दितकोककामिनीमनसः शल्यमकल्पमुद्धरन् ।
अमरेशदिगङ्गनामुखे[4] नवमार्वीरमिव स्मितं किरन् ॥१३॥
शतकोटिरिवानलं क्षणात्तिमिराघं दलयन्समन्ततः ॥
उदियाय विरोचनः[5] परान् परिहृत्यैव परां समुन्नति
युग्मकम्                                                                      ॥१४॥
अचिरस्फुटमेतदुज्ज्वलं[6] गगनाशोकतरोर्नु जालकम् ।
उत पूर्वदिशाऽवतंसितं विकचं कोकनदं विराजते ॥१५॥
स्थितये स्पृहयन्नतामरं जलधेः किं वडवाग्निरुत्थितः ।
क्षणदाविरहाद्दिनेशुषो ज्वलनोऽयं शशिनोऽथवा चितिः ॥१६॥
अजिनाग्निजनि चिनन्वता सुरगार्थेन गभस्तिभिर्मुदा ।
विलसत्करकैरवं स्फुटं नवमन्दाररागं नु भाति यः ॥१७॥
निहितं विभिन्नाम्बरापणे किमु माणिक्यमिदं विराजते ।
इति लोकवितर्कजृम्भितं तरणेर्मण्डलमुद्गतं पुरः ॥१८॥
सलिले शमनस्य सुन्दले नगमालम्ब्य तमालभूरुहः ॥
तिमिरं रविविद्रुतं द्रुतं[7] विशति स्मेति गिरेश्च कन्दरे ॥१९॥
निशि नेत्रभृतामपि स्फुटं परिणाहाल्कृतवन्महाऽन्धताम् ।
उदभून्मदर्कभास्तमो[8] लभते दुष्कृतकृत् क्व ? नापदम् ॥२०॥

१. अ या. दिशोऽभ्यगात्. ।
२. का. लि चिह्न ।
३. उत्प्रेक्षा ।
४. उत्प्रेक्षा ।
५. उपमाऽर्थान्तरन्यासौ ।
६. उत्प्रेक्षा ।
७. सन्देहालंकारनियमकाणि ।
८. अन्या या. नि ।

उदमज्जदशेषमुज्ज्वलं[१] सहसा सन्तमसाम्बुधे र्जगत् ।
निममज्ज विपत्सरस्वति प्रभयाऽर्कस्य तु चन्द्रमण्डलम् ॥२१ ॥
रजनौ विधुरां वियोगिनीमुपकृत्यैव नु[२] सुन्दरीततिम् ।
उदय लभतेस्म भानुमानुपकर्त्तोन्नतिमश्नुते न कः ? ॥२२ ॥
उपगच्छति भास्वतीन्द्रदिग्[३] ववसे द्रागरुणप्रभाऽम्बरम् ।
दयितोपगमे हि योषितामुचित तद्रुचिते प्रसाधनम् ॥२३ ॥
स्फुरदुष्णरुचे पुरस्सरो[४] नहि खद्योतगण. स्म भासते ।
महता सविधे लघीयस प्रतिपत्ति र्दधते हि मुद्रणाम् ॥२४ ॥
समम्रृक्षतति र्जहौ प्रभामुदयाद्रिं श्रयति प्रभाकरे[५]
अधिरोहति शासकासनानयभाजीव नृपे खलावली ॥२५ ॥
उदयत्यरविन्दबान्धवे तिमिरेऽलीयत घूकमण्डली ॥
सुरपक्षसमर्थके हरावसुरालीव भिया रसातले ॥२६ ॥
शयिता. सलिले तपस्विनी विरहव्याकुलचेतना सती. ।
नलिनीस्तरणिं प्रियं पुरो[६] विहगा प्राप्तमसूचयन्निव ॥२७ ॥
द्विजवृन्दकृतार्घवारिभि र्ननु धौत[७] शितिसप्तिमण्डलम् ।
स्फुटकोकनदानुकरिता- मपहायामलरोचिराचिनोत् ॥२८ ॥
असुराविनयात्क्रुधाऽरुणस्तरणि र्वाऽम्बुजिनी र्निभालयन् ।
प्रससाद सुखाकरोति र्वा[८] दयिता दृष्टिपथ गता न कम् ॥२९ ॥
शशिना विकलीकृता. करै सकला प्रेष्ठतमा सरोजिनी ।
उदलीलसदेष कौतुकात् किमु तैरेव [९] वशी विभाकरः ॥३० ॥
सुरदुन्दुभिनादबोधितो[१०] नियतश्चङ्क्रमणे दिवाकरः ।

१. रूपकसमुच्चयौ ।
२. अ न्यासोत्प्रेक्षे ।
३. अ न्यासोपमे ।
४. अ.न्यास ।
५. इन पूर्णोपमे ।
६. परिकरोत्प्रेक्षे ।
७. उपमोत्प्रेक्षे ।
८. अ.न्यासोत्प्रेक्षे ।
९. व्याघातोत्प्रेक्षे ।
१० उत्प्रेक्षा ।

हरिदुर्लभदर्शनस्पृहा-तरलः किं द्रुतमागमद्दिवम् ॥३१ ॥
जडिमानमिताः सकण्टका[1] मृदुवं भातिकवातवेपिताः ।
उपसर्पति खल्वहर्पतौ जहसुर्वारिसरोजराजयः ॥३२ ॥
विधुरा विरहेण पद्मिनी-पटली बालतमेऽपि भास्करे ।
स्थिर संस्तवमाप्य शम्बर द्विपतीवाशु-[2]रतिर्दधौ गतिम् ॥३३ ॥
प्रियसूरसमागम चिरादुपलभ्यातिविकासितान्तरा ।
नलिनावलयोऽप्यमोचयन्नलिनः[3] कोरककूटबन्धनात् ॥३४ ॥
अरविन्दपरागलुण्ठनादुचित निरयधिगम्य बन्धनम् ।
उपसीनभयेन कोशतो निरगच्छन्द्रुतमेव षट्पदाः ॥३५ ॥
कमलाकरकेलिकौतुकी पुनराप्य स्वपद समृद्धिमान् ।
विदधे तपसा निराकृति कुरुतेऽरिप्रतिशोध-[4]मुन्नतः ॥३६ ॥
कुमुदानि विपक्षसम्पद[5] ह्रशोभान्यनल निरीक्षितुम् ।
विकलानि शुचा न्यमीलयन्नयनानीव दलानि सत्वरम् ॥३७ ॥
द्विपि भाति रवौ भ्रमन्मतिः कुमुदश्रेणिरहो निजां श्रियम् ।
विनिधाय[6] सरोरुहावलावदसीय मलिनत्वमाददौ ॥३८ ॥
वियुतादपि तेन भास्वतः[7] प्रतिनेतुर्गमिता करग्रहम् ।
विकलाः सकला मुमूर्षया कुमुदिन्यो निमगज्जुरम्बुनि ॥३९ ॥
हृतकान्ति विवेकवं भवस्तपनेन प्रसभं पराजितः ।
पतितः[8] प्रतिकर्तुमक्षमस्तनुतामेव ततान चन्द्रमाः ॥४० ॥
विधुरा ननु कोकयोषित[9] कृपयाऽऽश्वासयितुं कति क्षणान् ॥
विरहव्यसनं रविस्ततो व्यपनीय प्रमदास्त्वतीन्निशात् ॥४१ ॥

१. समा.।
२. उप.।
३. इत समा.।
४. समा.अ.न्या ।
५. समा. अनलमराकानील्पर्थ.।
६. समा परिवृत्ति ।
७ समा.गम्योत्प्रेक्षा ।
८ स्मा ।
९. उत्प्रेक्षापर्यायौ ।

हरिदश्वविकरस्वरप्रभा[१] -पटलेनाच्छुरिते समन्तत ।
तरवस्तपनीयशैलता शिखरैरम्बरचुम्बिनो दधु ॥४२ ॥
मिहिरारुणयो पृथक्प्रभे निपतन्त्यौ यमुनाऽम्भसि क्षणम् ।
सुरसिन्धुसरस्वतीनिभे सुषमां तीर्थपते वितेनतु. ॥४३ ॥
यदि मारकती स्थली मनाक्कलयेयु. किल मौक्तिकोत्करा. ।
तुलयेयुरलं तृणालिगानपि कासारकणानहो तदा ॥४४ ॥
सकला· समये प्रवर्तयन्नुपचित्योचितकर्मसु प्रजा. ।
सुतरामभिसारचौरिका प्रतिबध्नन्प्रततताप[२] तापन ॥४५ ॥
मुकुल परितो विकासयन् सरितो वीचिकुलं परामृशन् ।
हरिजन्ममुदेव मन्थर.[३] पवनो मञ्जु महावने ववौ ॥४६ ॥
भगवज्जनुषाऽभिनन्दित[४] पवमान. प्रतिकाष्ठमादृत. ।
वितताार चिराच्चितं मुहुर्निजसर्वस्वमफल्गुसौरभम् ॥४७ ॥
स्थविरस्य यशोमतीपते क्व निराशस्य पराऽनपत्यता ।
क्व ? च तादृशसूनुभू[५] र्विधावनुकूले किमिहास्ति दुर्घटम् ॥४८ ॥
निममज्ज पिबन्सुतोद्भव श्रुतियुग्मेन सुधासहोदरम्[६] ।
प्रथम प्रमदाम्बुधौ ततो यमुनास्रोतसि गोपपुङ्गव ॥४९ ॥
पशुपालपते र्महामतेरपि गाम्भीर्यविजिताब्धिमानसम् ।
प्रमदस्तनुजन्मजन्मज.[७] किमु ? नोच्चैश्चपलीचकार स ॥५० ॥
लभते यदि सूनुजन्मनो बहुतोकोऽप्यमिता मुद जन[८] ।
अथ तस्य कथ नु मीयतामनपत्यस्य जनेश्वरस्य सा ॥५१ ॥
यदि भूरितरं सुधाभरंश्चिरमाप्लावनमावहेन्मरु ।
तनयोद्भवनन्दिनस्तदा[९] जरिणस्तस्य तुलालवं स्पृशेत् ॥५२ ॥

१ इनोऽनि ।
२ रम्या,का लि ।
३ उन्दे ।
४. अति.ममा ।
५ विराम ,अ न्धा ।
६. रू अत्यन्तनिरम्कृतनाट्यध्वनि ।
७ अति,वम्पुध्नी ।
८ अर्धा परिवर्ता ।
९ इनोऽनि ।

उदभूत्पटहानकध्वनिः प्रतिहारे व्रजनायकस्य य ।
तनयोत्सवमाशु सूचयन्नु लेभे प्रथमं स दूतताम् ॥५३ ॥
तदनु प्रहिता मुदा स्म प्रियसन्देशहरा नरा व्रजे ।
वसनाभरणादि सादरं लभमाना प्रतिसद्म बभ्रमुः ॥५४ ॥
व्रजराजगृहे गरीयसा विधिना सूनुसमुद्भव-श्रुतेः ।
सहनु प्रथमं नुवाऽऽगमन्नुपनन्दप्रमुखाः सनाभयः ॥५५ ॥
अवगम्य तनूजजन्म ते व्रजनाथस्य भृशं प्रसादिनः ।
सहसाः सहसा[१] समासदन्सह सार्धं सुहृदा च वल्लवा ॥५६ ॥
प्रथमं पशुपाः समे मुदामतिरेकेण जडाद् व्रजेश्वरात् ।
कुतुकेन तत परस्परादहरन्मोहितपूर्णपात्रकम् ॥५७ ॥

## युग्मकम्

विवशीकृतकामि-मानसो मुदिरेणेव तडित्समुच्चयः[२] ।
कलधौतरुचिः समावृत शिखिकण्ठः प्रतिभासिवाससा ॥५८ ॥
चिरसञ्चितचित्तविक्लवं हरिजन्मश्रुतिमात्रतस्त्यजन् ।
पशुपालविलासिनीजनो मुदितः प्राप च नन्दमन्दिरम् ॥५९ ॥
जरतीविसरो यशोमतीभवने दुर्लभमुत्सवं विदन् ।
उपनीतविचित्रसम्भृति र्मनसोऽप्याशुतरं समागमत्[३] ॥६० ॥
वसुधाविबुधा बुधः सुधामधुरं कृष्णजनुर्निपीय[४] तत् ।
सकलाः सफला निजाशिषः कलयन्त प्रसरादुपागमन् ॥६१ ॥
सुहृदः सखिभावभूषिता धृतमैत्राश्च भुजोरुपादजाः ।
सुदिनेन सहैव सम्मदादुपतस्थु पशुपेन्द्रमन्दिरे[५] ॥६२ ॥
भवनेषु निबध्य नैकधा परितो वन्दनमालिकाशतम्[६] ।
मधुपालिनिषेविताः स्रज प्रणयेनोपजहार मालिकः ॥६३ ॥

---

१ यम.।
२ उप० ।
३. अति० ।
४ अति० वा० ध्वनि ।
५. वा० लि० सटी० ।
६. इतो भावध्वनय ।

प्रमदेन शिशोर्विभूषणं रचयित्वा मणिकाञ्चनाचितम् ॥
व्रजराजमुपानयत्स्वयं न चिरात्ससदि रुक्मकारकः ॥६४॥
कलसद्वयमाशु मङ्गलं निदधौ द्वारि नवं कुलालकः ।
शुचि रञ्जयतिस्म देहलीं चतुरश्चित्रकरश्च कौतुकात् ॥६५॥
कुशलो व्रजनाथकेतनप्रतिहारे प्रतिहारकस्तथा ।
धुरि पौरजनस्य पश्यतो निजमाया विविधा मुदाऽऽतनोत् ॥६६॥
विमृशन् परमृक्षवर्तनं[1] हरिमेषादिगतिं गवेषयन् ।
शकुनग्रहकृच्च वेधविद् गणको लुब्धकवत्समाययौ ॥६७॥
मनसाऽधिसमाधि निर्भरं मुनयो वीक्षितुमक्षमाश्चिरम् ।
तमवेत्यनुजातमव्ययं[2] व्रजमुद्यत्कुतुकाः समाययुः ॥६८॥
मधुरैर्विशदार्थमञ्जुलैः सरलैः सूचितदिष्टवैभवम् ।
अपि मागधसूतवन्दिनः स्तवनैर्नन्दमनन्दयन्नलम् ॥६९॥
सहवैणविकैः सवैणिकैर्निपुणैर्मार्दङ्गिकैश्च पाणिघैः ।
परितः कुतुकेन नर्तका नवतौर्यत्रिकमन्वतानिषुः ॥७०॥
कतिमाङ्गलिकानि नाटकप्रभृतीनि श्रुतकीर्तिकौशलाः ।
*भरतागमतत्त्वदृश्वभिर्भरतैरभ्यनयन् कुशीलवाः ॥७१॥*
स्वरसौभगविभ्रमैस्तथा नमयन्त्योऽप्सरसो यदृच्छया ।
कुसुमायुधतन्त्रशासिका ननृतुर्वारविलासिलासिकाः ॥७२॥
शबराश्च पुलिन्दपुक्कसैर्मिलिता भिल्लकिराततल्लजैः ।
धृतवन्यमहोपदा महे समुपस्थाय विनोदमैधयन् ॥७३॥
व्रजनाथवधूनियोगतः प्रथमं सादरमौचितीं श्रिता ।
वनिताजनमातिथेयवित् प्रणयेनोपचचार रोहिणी ॥७४॥
व्रजराडुपसेदुषां पृथक् प्रमदोन्मादवशंवदोऽपि सः ।
न जहावुचितादरक्रमं क्व सतामाचरणं[3] विशृङ्खलम् ॥७५॥
दधिकोलिफलैः पुरोधसा विदुषा दर्शितपद्धतिस्ततः ।
प्रयतो निरवीवृतत्स्वयं निजनान्दीमुखपित्रुपासनाम् ॥७६॥

१ पूर्णोपमा ।
२ विरो० ।
३ अ० न्या० ।

क्षितिदैवतवृन्दसाधित पशुपेश सुतजातकर्म सः ।
विधिनाऽङ्कविलासि कर्मठ- श्रुतदृश्वप्रवरः समापिपत् ॥७७ ॥
सुचिरलमनोरथद्रुमे सविशेष फलति प्रसन्नधी ।
सुरसहतये पुराऽऽश्रुतं द्विगुणीकृत्य कृती समार्पयत् ॥७८ ॥
ध्वजवन्दनमालिकाऽर्पणे रुपचारोज्ज्वलया सपर्य्यया ।
अवृतन्नुतिगीतिनर्तनै प्रतिदेवायतन महामह- ॥७९ ॥
न स नन्दगृहे परं तथा शुशुभे कृष्णजनुर्महोत्सवः ।
अपितु प्रविसद्म भूतले परित. किञ्च पुरे सुपर्वणाम् ॥८० ॥
भगवत्पदपङ्कजाश्रयान्महनीयामवनीमिवार्चितुम्[१]
मुमुचुर्मुदिता दिवौकसः कुसुमासारमपारमम्बरात् ॥८१ ॥
अशनै रुपदेवनोदिता मधुर व्योमनि नेदुरानका ।[२]
कलमप्सरस सकिन्नरा सुलयं लास्यजुष. सुखं जगुः ॥८२ ॥
अनुकूलसमीर-सङ्गतो निविड क्लान्तिहरः पयोधरः ।
असृजद् युगपद्विशालयो[३] प्रतिपत्ति- व्यजनातपत्रयोः ॥८३ ॥
समवेत्य समा स्तन्धय जगदीश विषमेषु रक्षितुम् ।
स्थितिसिद्धधियः[४] पुरन्धयो बहुधा माङ्गलिकं विधिव्यधु. ।८४ ।
उरगप्रमदा धरांगता[५] निमिषानप्सरसोऽथवाश्रिताः ।
समुदञ्चितपञ्चमा जगु र्व्रजवामा कुलदैवतस्तुतिम् ॥८५ ॥
मृदुलास्तरणः सदर्हणस्तपनीयाभरणो गवागणः ।[६]
व्रजनाथविधि स्वहुकृतैश्चलितग्रीवमिवान्वमोदत ॥८६ ॥
पटहाम्बुदनादनन्दित[७] विततच्छत्रितचारुचन्द्रकम् ।
कलकेकमखण्डताण्डवं रचयामास शिखण्डिमण्डलम् ॥८७ ॥

१. उत्प्रेक्षा ।
२. समु० ।
३. निद० ।
४. का०लि० ।
५. ससन्देहः ।
६. उत्प्रेक्षा ।
७. रूपकोपमानुप्रासा ।

न ननन्द न नन्दनन्दन[१]-प्रभवाकर्णनयाऽखिलं जगत् ।
विविदु सुरचातुरीमिमा न यतस्तावदहो निशाचराः ॥८८ ॥
विपुलामवनीं पयस्विनी रमिता गा कनकाचलांस्तथा ।
तनयाभ्युदयाय तत्परो[२] वसुमानुत्ससृजे व्रजेश्वरः ॥८९ ॥
अनिदानविदोऽपि बालका निनदत्किङ्किणि नर्तका मुदम् ।
अजिरे नवीनतर्पङ्किले[३] विलुठन्तश्च दिगम्बरा ददु ॥९० ॥
दधिकुङ्कुमलेपन मिथस्तरुणा गाढममूमुदच्चिरम् ।
सवयोमिलनेऽन्यदाऽपि श[४] वलते किं पुनरीदृशोत्सवे ॥९१ ॥
विकसद्वदनाम्बुजा स्खलद्वसना भावितनृत्यगीतयः ।
व्यलिपन्प्रमदा परस्पर दधिहारिद्ररजोभिरङ्गने[५] ॥९२ ॥
स्थविरा व्रजपात्मजोद्भवान्नितरामुत्सहमानमानसा ।
कलगीतसतालताण्डवैरपि यूनश्चकितान्वितेनिरे[६] ॥९३ ॥
निपतत्प्रसवौघकैतवात् तरवोऽप्यच्युतजन्मनन्दिन[७] ।
ददत पृथु पारितोषिक ननु सन्तानधिय प्रचक्रिरे ॥९४ ॥
उपलभ्य मनोजसुन्दर तनुज वल्लवपुगवो हरिम् ।
वलिकर्णदधीचिदुर्लभ वसुदानाच्चिरमाचिनोद्यशः ॥९५ ॥
सुरभूमिरुह वनीयका सुहृदोभाग्यमुदञ्चिताकृति[८] ।
गुरवो विनय दृशेलिमं विविदुर्गोकुलमण्डलेश्वरम् ॥९६ ॥
त्रिदशास्पृहणीयवैभव स्थितिशाली पशुपालपुगव ।
वृषभानुरिवानिश भृश गुणिना सत्करणत्र चातृपत् ॥९७ ॥

१ अनु० ।
२ तुल्ययोगिता ।
३ स्वभावोक्ति ।
४. अन्या, अ प ।
५ स्वभा, अचलेऽप्यय ममुदा चारो व्रजे ।
६. व्यतिरेकध्वनि ।
७. मारहर्वोत्प्रेक्षा ।
८ उन्नेया ।

अशनैर्वसनैर्विभूषणै र्वचनै प्रेममयैश्च वन्दनै ।
विनतौ समुपागतान्महे सहसाऽतोषयतां व्रजेश्वरौ ॥९८ ॥
प्रविविच्य गुणान्क्रमेण तान्विभवै पूजयत स्म दम्पती ।
धनिभि सुकरधनार्पण[१] प्रणयात्सत्करणं तु दुष्करम् ॥९९ ॥
कमनीयरुचा स पश्यतां शिशुरेवाशु मनांसि चोरयन् ।
अनुधाविविचित्रवीरिकाऽऽचरणं प्राक्रमतेव[२] केशव ॥१०० ॥
नदिवा[३] न विभावरी मनागुपम नो नच सायमेव वा ।
बुबुधु विविधोद्धवोदधौ भृशमामग्नधियो व्रजौकस ॥१०१ ॥
अविभावितकालनिर्गमो रमणीयावयव क्रमोन्नत ।
जगदीशजनुर्महोत्सव स्थितपूर्वोऽपि[४] ययावपूर्वताम् ॥१०२ ॥
गुरुमिष्टवियोगजव्यथा स्थविरौ सोढुमनीश्वरौ[५] परम् ।
प्रणयप्रवणौ चिरेण तौ जहतुर्नेत्रजल न बन्धुताम् ॥१०३ ॥
परिपूर्य महोत्सवं चिरादधिकं मानमवाप्य नन्दिता ।
कथमप्यथ लब्धनिर्गमा गुणिनो धाम निज प्रतस्थिरे ॥१०४ ॥
नित्योद्यद्वृषभानुभूतिसजुषा नन्दापितार्थोचितो
निस्सीमादरसम्भृतेन विलसन्मुत्सिन्धुपूराहितः ।
राधोद्भूतिमहामहेन तुलित श्रीकृष्णजन्मोत्सवः
सोऽप्यंतेन[६] तथेति चक्रतुरमू चित्रागितान् पश्यतः ॥१०५ ॥
तयोराशाश्वासादयति रमणीयां परिणति
दृढध्यानाध्यासादविषयसमाधाविव यमी ।
मुहुः पश्यन् कृष्णस्मितमुखसरोज धृतविधु[७]
स्थिरानन्दो नन्दो दिनततिमनैषीत्रिमिषताम् ॥१०६ ॥

१. अ.न्या.।
२. अनि.उत्रे ।
३. वस्तुध्वनि ।
४ विरोधो वस्तु ध्वनिश्च ।
५ का.लि.।
६ उपमेयोपमोपमे,शार्दूलविक्रीडित छन्दश्च ।
७ उप.रूप सम.निदर्शना । इत-शिखरिणीद्वयम् ॥

सर्गसमाप्तिश्लोकः
अथ 'माया देवी'-सुकृतिपटली-मौलिमहित-
प्रधी-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचित ।
द्वितीय श्रीराधापरिणयमहाकाव्यघटको
निसर्गश्री सर्गस्थितिचरमसीमानमभजत् ॥१०७॥

*इति राधापरिणयमहाकाव्ये कृष्णाङ्के जन्मोत्सवसमारम्भो नाम द्वितीयः सर्गः सम्पूर्णः ॥*

## अथ 'पूतनाशातनो' नाम तृतीयः[१] सर्गः ।

अथावतीर्णं व्रजराजमन्दिरे[२]
मुरारिमात्मप्रलयाय भोजराट् ।
अवेत्य देवर्षिमुखादनिर्वृतो
वशी प्रतीकारमचिन्तयच्चिरम् ॥१ ॥

अहो सुराणां कपटे पटीयसा-
मभीष्टसंसाधनजागरूकता ।
रहो यदामन्त्र्य मदन्तमीप्सुभि
स्तवैरितस्तैरवतारितो हरिः ॥२ ॥

मया विधेय तु तथा सुपर्वणां
न कूटनीतिः फलिता यथा भवेत् ।
न कल्पते क्वापि महीयसामपि[३]
द्विषि प्रमादो हि शिवाय भूभृताम् ॥३ ॥

उपेक्ष्यमाणाः सहसोन्नता यतः
परे विनाश्याश्नुवते गदस्थितिम् ।
तदत्र दोर्विक्रममात्रनिर्भरां[४]
शुभां न वेद्मीभनिमीलनस्थितिम् ॥४ ॥

महान्तमप्याशु निहन्त्यनावृतं
रिपुस्तनीयानपि वीर्य्यवत्तमः ।
निदर्शनं तत्र विशृंखलं तमो[५]
निर्यहिता तीव्रमहालघू रविः ॥५ ॥

१. सर्गेऽत्र १७ श्लोकं यावद्वंशस्थविलं छन्दः ।
२. इतस्त्रयोदशभिश्श्लोकैः कंसस्य चिन्तामाह ।
३. अ. न्या. ।
४. निद. ।
५. उप. ।

महाहवोत्सङ्गितभङ्गियातना-
ममृष्यमाणा परिषद्दिवौकसाम् ।
उपेत्य साहाय्यकमत्र मानिनी
ध्रुवं चिरान्मा प्रतिकर्तुमीहते ॥६ ॥
प्रसह्य देवासुरसंगरे पुरा
सुरान्मथन्त तरसाऽयमेव माम्[१] ।
ममैव शूलेन सहायके समैः ।
सम कथाशेषममर्त्यवीभवत् ॥७ ॥
शिशुत्वमायावृतविग्रहोऽप्यसौ
क्षणेन रक्ष क्षपणोऽमरप्रिय. ।
उपेक्ष्यतामद्यकथं तथाविधः
पुराणवैरी मम तार्क्ष्यवाहन ॥८ ॥
स्तनन्धयो वाऽस्तु युवाऽथवा जरन्
कृतापकार सकृदेव मृष्यते ।
अनारत नैकनिकार-कारणे
शिशौ कृष्णे भवतु पराभवस्पृक् ॥९ ॥
विजृम्भमाणे तरसि क्रमादसौ
पुन समासाद्य विशेषसम्भृतिम् ।
न यावदुत्तिष्ठति[२] गोष्ठभृत्सुतो
निबर्हणामर्हति तावदेव मे ॥१० ॥
अनेकधा सयति कल्पितोपधि
तमेनमारादभिपत्य वैरिणम् ।
तत प्रबन्धं कपटस्य कर्कशै-
र्नयाम्यकल्पं कुतुकाद्यमक्षयम् ॥११ ॥
तदत्र मायाचणचक्रवर्तिनी
धृतार्भकव्रातनिपातनव्रता ।
सदाफलीभूतकृति र्वशवदा
नियोजनीया कुशलाय पूतना ॥१२ ॥

१ कालनेमिरूपम् ।
२. ऊर्ध्वकर्मणि तिङ् ।

भवेदनेनाहितशोधन स्फुटं
तथा प्रयासोऽत्र न लेशतोऽपि मे ।
तदाचराम्येव, विना परिश्रमं
मनीषिनानीतिपरो[1] हि नीतिवित् ॥१३ ॥

इतिक्षणाद्ध्यवसायनायक-
स रक्षसां दूतमुखेन राक्षसीम् ।
समर्पयिष्यन् निधनायति धुर
वकस्वसारं बहुसारमाह्वयत् ॥१४ ॥

निशम्य भोजेशनिदेशमादृता
विवेश सा राजनिवेशनं मुदा ।
सरागमाह्वानमपि प्रभोरहो
निषेवमाणा[2] गणयन्त्यनुग्रहम् ॥१५ ॥

चिराय शश्वत्सहवाससंस्तुता-
मपि द्वितीया रसनामिवान्तकीम् ।
समागतन्तां तरसा निरीक्ष्य ता
बिभाय भीमोऽपि सुरद्विषा गणः ॥१६ ॥

प्रभोः समाकारणयाऽऽत्मगौरवं
विभावयन्ती रभसापतत्पदा ।
प्रभुप्रसादस्पृहयालुरेकिका[3]
मुदा महीपान्तिकमाजगाम सा ॥१७ ॥

निभाय यं कज्जलपुञ्जमेनकं
चकम्पिरे के न रणाजिरे सुराः ।
सुराम‍दध्वस्तमतिश्चकार यो[4]
रयोद्गतस्तातनिशातबन्धनम् ॥१८ ॥

धनं परं यस्य सतां निराकृतिः ।
कृतिः परद्रोहपरायणेहितम् ।

१. अर्थान्तरन्यास ।
२. अ.न्या.।
३. का.लि.।
४. इतः श्लोकद्वये धनक-विशेषः।

हितं विधित्सु र्विनता सुहृत्तमा
तमासनेऽपश्यदगेन्द्रसन्निभा ॥१९ ॥
स्मितामृतेन[१] स्नपन विकासभृद्
दृगम्बुजैरर्चनमाचरन् विभु ।
प्रसद्य तस्या प्रथमं स दूरत
तरङ्गयामास भृश मुदापगाम् ॥२० ॥
उपेत्य जीवेति-वितीर्णयाऽऽशिषा
कुलोचिताचारपरायणाममुम् ।
हसन्नुपावींविशदीहिताप्तये
नय परावर्जनमेव[२] भूभुजाम् ॥२१ ॥
तदादरोच्चैरुदितान्तरामित-
प्रमोदपूरं बहिरानयन्त्यसौ ।
विभासितोद्यद्दशना[३] निशाचरी
प्रसादयन्ती विनताऽब्रवीन्नृपम् ॥२२ ॥
अये महराज ! गुणानुबन्धना-
दल प्रसीदन्ति[४] भजन्ति भूरि ताम् ।
जवादहम्पूर्विकया कयाऽप्यहो
भवन्ति भव्यानि विजृम्भितानि ते ॥२३ ॥
यत प्रसादेन तवैव मङ्गल
प्रसूतमद्धा जगति प्रवर्तते ।
प्रभो तदेष त्वयि विश्वशासके
शिवानुयोगोऽवसर क्रिमश्नुते ? ॥२४ ॥
अतन्द्र भोजान्वयचन्द्र ! तावक-
प्रतापभानौ प्रतपत्यहर्निशम्[५] ।
वहन्ति जाड्य वत कम्पिता. परे
मुदं च रक्ष कुमुदानि तन्वते ॥२५ ॥

१ रूप. ।
२. अ. न्या ।
३. अप. ध्वनि ।
४. अत्य ति. का. ध्वनय ।
५ रूप. समु । इतो भावध्वनय ।

त्वयैव सद्यो ददता वनीयक-
व्रजस्पृहाऽदृष्टपथाध्वगं फलम् ।
महत्त्वमूलं शतशः समीहित-
प्रदानदम्भः सुरभेरभेदि स[1] ॥२६ ॥
न जातु वक्रेषु विकुञ्चितालिकं
तवाननं पश्यति सयुगे जनः ।
गुणानुरक्ता प्रशमेन दुर्हृदा-[2]
मनन्यनाथाः परिपासि यत्प्रजा ॥२७ ॥
कलङ्कपङ्काविलमुज्ज्वलोत्तमात्
प्रतिक्षपान्तक्षपित निरत्ययात् ।
तवासुराधीश यशस्सुधानिधे[3]
ध्रुवं विधि भेदयितु विधु व्यधात् ॥२८ ॥
तव प्रतीपप्रकरस्य दुर्यशो[4]
मषीनिभं कर्णतमालपल्लवम् ।
विधाय भूतावक ! तावक यशो
दिशोऽवदातं कलयन्ति शेखरम् ॥२९ ॥
वितीर्णकल्पान्तहुताशनभ्रमं
प्रलोपितारात्यवरोधविभ्रमम् ।
तव प्रताप भुवनेषु बम्भ्रमं[5]
विलोक्य मित्रान्तरुपैति सम्भ्रमम् ॥३० ॥
भ्रमन् वने धातुगणोपसंग्रह-
प्रसंगतः कंसपदे श्रुति गते ।[6]
भिया समालिङ्गति साश्रुलोचनः
तवारिनारीनिकरः परस्परम् ॥३१ ॥

१. व्यति. । अति. ।
२ नीतिनैपुण्य व्यज्यते ।
३. उत्प्रे. व्यति ।
४. उप. अप. समा. वस्तुध्वनि ।
५. यम विरो. ।
६. भ्रान्तिमान् ।

रणे ध्वनत्कुञ्जरपुञ्जवारिभृद्-
गणे चलत्तोत्रतडित्युदञ्चति ।
प्रवर्तते ते नृपते ! वत द्विषा[1]
गृहेषु वामानयनाम्बुवर्षणम् ॥३२ ॥
वशीकृतेन्द्रस्य विधेयभोगिनो-
धराऽधिराजस्य विभो तवापि भो ।
विपक्षतामीक्षितवल्गु विक्रम[2]
समाचरेत् कोऽत्र ? सचेतनो जन ॥३३ ॥
पुरा प्रवृत्तस्य दिशा जये तव
श्रिता यशोऽक्षय्यमजय्यमानिन ।
अचिन्त्यमालोक्य पराक्रम स्वय
वशवदा ये परिवारतामगु ॥३४ ॥
द्विपत्सु ते रोपकपायित मुखं
प्रतीक्षमणा समरोद्धटा भटा ।
अहर्निश ते स्थिरकीर्तिसम्पदे
नदन्ति चाणूरमुखा सुख पुरः ॥३५ ॥
हिमांशुपाशिज्वलनानिलैरलं
निशुम्भमाने दितिजव्रजे पुरा ।
शताङ्घ्रिदोराननन-कालनेमिना
निकामभोजायितमद्भुतं त्वया ॥३६ ॥

युग्मकम्:-

प्रजाऽनुरक्ता सफला वसुन्धरा
निदेशलिप्सातरला सुरासुरा ।
सदा रणोत्साहपरिस्फुरद्बल
निरन्तरायप्रतिमाश्च मन्त्रिणा ॥३७ ॥
गुणातिरेकाद् गलितावधि स्फुट[3]
जगत्प्रभो ! यद्धने त्वदीयताम् ।

१ अमद्गति । स्प
२. कालि ।
३ तुल्ययोगिना ।

स्वैर्वहिर्धीरतयेव संकुचन्
स्मितेन कुर्वन् वचसोऽभिनन्दनम् ।
वितीर्य ताम्बूलपुटं पटु गिरा-[१]
मवोचत स्वार्थपरस्तदाऽसुरः ॥४५ ॥
समत्सरागां परकीयसम्पदि[२]
प्रतापसन्तापितसर्वचेतसाम् ।
समृद्धिचिन्तास्तिमितान्तरात्मनां
क्व नाम राज्ञामयि निर्वृतं मन ॥४६ ॥
अये त्वयेपत्करमभ्युपस्थितं
प्रयोजनं माङ्गलिकं सुरद्विपाम् ।
तदप्रयासेन विधाय शोभने
तनुष्व राकेशसहोदरं यशः[३] ॥४७ ॥
विधौ प्रमादत्यनिवार्य्यसङ्गता-
वुपस्थितं कार्य्यमहो यशस्करम् ।
जनः सुसम्पाद्य जगत्यनश्वरं
स्वनाम नामाव्ययदेऽधिपिञ्चति ॥४८ ॥
सहस्रशः सयनि दृष्टविक्रमा
त्वदद्वितीयाक्रमणैरपाकृता ।
महानुभावे ! प्रतिकारकातरा
सुरा न भेजु कति कान्दिशीकताम् ॥४९ ॥
यशस्मि राज्ये वसुविग्रहेऽप्यहो
प्रमोदनिद्रामुपलम्य निर्वृत ।
अशनिर्नीहारविभक्तरंजसो[४]
महानुभावे महिमा नवैव स ॥५० ॥

१ उत्थे, का ति ।
२ कालि ।
३ उर ।
मन-

तृणीकृतप्राणपणेन कुर्वती
मुदा समिद्यूत महो सहाहितैः ।
जय बलीयस्यबलाऽपि जग्मुषी[1]
त्वमेव रक्षोगणकीर्तिरक्षिणी ॥५१ ॥
निशाचरद्वेषरतैरनारत
निवेदितो दीनदिवौकसा कुलैः ।
पुरातनारातिरहो हरि स नो
जिघांसया नन्दगृहेष्ववातरत् ॥५२ ॥
क्व गोपबालो जलबुद्बुदोपमः[2]
क्व चास्मि जिष्णु र्भुवनानि यद्यपि ।
तथाऽपि को नीतिविशारदो नृपः
प्रतीत्य शत्रुं लघुरित्युपेक्षते ॥५३ ॥
तदङ्ग नन्दस्य निवेशन छला-
दुपेत्य कृष्ण मृदुल तरस्विनी ।
करेणुवद्वेणुकरीरमुद्धत[3]
मुदानया दर्शनमाशु शोभने ॥५४ ॥
त्वयाऽत्र विष्णौ तरसा निषूदिते
निसर्गमायाविनि रक्षसा रिपौ ।
निकृत्तमूलद्रुमदुर्दशामसौ[4]
न लप्स्यते न त्रिदिवौकसा गणः ॥५५ ॥
इति स्वसिद्धार्थमनर्थमादिशन्
प्रगल्भवद्दानवपुंगवः क्षणम् ।
निषेधशङ्कातरलीभवन्मना-
विलोकयामास बकीमुखं मुहुः ॥५६ ॥

---

१ रूप.विरो. ।
२. निपम अ.न्या.।जयतिर्न्यूनीकरणे सकर्मकः।
३ उप ।
४ निद. ।

अवेहि नून कवलीकृत जवात्
तव प्रतापज्वलनेन त शिशुम् ।
क्व नाम पञ्चाननवैरमाचर-[१]
न्नपि क्षणं प्राणिति सन्निधौ शश ॥५७ ॥
इति ब्रुवाणा मधुरस्मित लसद्
विकासमाकाशचरी निशाचर. ।
स्मर बलारातिरिवेश्वराश्रम[२]
बकस्वसारं प्रजिघाय गोकुलम् ॥५८ ॥
वलस्मयोत्तम्भितमानसा न सा
पराक्रम दैत्यरिपोरजीगणत् ।
विवेकपङ्केरुहकाण्डशातने[३]
हिमायते मोदमयो मदोच्छ्रय ॥५९ ॥
भृश सदस्यैं स्तुतविक्रमा स्फुटत्
कदम्बरम्य दधती[४] कलेवरम् ।
प्रणम्य सा भोजपुरन्दर जवा-
दथ प्रतस्थे निधनाय पूतना ॥६० ॥
निकाममौपल्करमच्युतस्य सा
निवर्हण गर्हितधी प्रजानती ।
प्रभुप्रसादातिशयोत्सुका गतौ
न वा विलम्बं लवतोऽपि चक्षमे ॥६१ ॥
पथि प्रयान्ती द्रुतमेव पञ्चता
यदप्यमूं दुरशकुनान्यसूचयन् ।
न्यवर्ततासौ न तथापि, देहिनां[५]
विधौ पराञ्चत्यतिवर्धते मह ॥६२ ॥

१ रूप, अ न्या ।
२. उपमालकारेण शीघ्रनाशरूपवस्तुध्वनि ।
३ अ न्या । रू उप. ।
४ उप निद हर्षाख्यव्यभिचारिभावध्वनि ।
५ अ न्या ।

उपेत्य वायोरपि वेगवत्तमा[१]
महावनं सा मनसा सहैव तत् ।
धृतातिलक्ष्मीकवपु र्निरीक्ष्य तत्-
समृद्धिमद्धा चकिता व्यतर्कयत् ॥६३ ॥
सुपर्वसद्माधिकगर्वखर्वण-
प्रयासिपद्मासननिर्मिता-[२] ममूम् ।
पुर पुरस्कृत्य विचित्रसौभगा
जगत्त्रये कि न मही महीयते ॥६४ ॥
परश्शतस्वर्णमयेषु वेश्मसु
क्षतापदोऽत्रापि सहैव भोगिभि ।
यदासतेऽमी विबुधास्ततोऽहिभू-[३]
दिवोरनौपम्यदो ध्रुव मुधा ॥६५ ॥
विशङ्कटं भूपितभोगिगण्डल
वृषाश्रितं भूतिविभासित सितम् ।
शिवाभिराम द्विजराजराजित[४]
गिरीशवर्ष्मेव विभात्यद पुरम् ॥६६ ॥
अनन्तभोगव्यवसायिसम्पदा
परैरदृष्टेन विलुण्ठन.परै ।
सम किमेतेन तुलाधिरोहणे[५]
द्रुतं लघिम्ना त्रिदिवो दिव ययौ ॥६७ ॥
व्रजेऽखिलो वक्रतया विनाऽप्यहो[६]
श्रियं दधानो वचसो दृशोर्भृशम् ।
समावृतो बन्धुजनैरहर्निश
वियोगखेदस्य न भाजन जनः ॥६८ ॥

१. अति.।
२. उत्प्रे.।
३. उत्प्रे.।
४. पूर्णोपमा.।
५. उत्प्रे.।
६. व्यति.ध्व_।

समृद्धिसौभाग्यनिबन्धने ध्रुवं
स्थिते विवादे भुवनान्तरे सममृ।
इदन्तु वैकुण्ठमुपाहित स्वयम्[१]
भुव प्रतिष्ठापयितुं स्वयम्भुवा ॥६९ ॥
अनल्पमित्थं सविकल्पकल्पना
वितन्वती चेतसि वीक्ष्य सौभगम्।
महावने द्रागवधाय पूतना
वधाय सस्मार निदेशमीशितु ॥७० ॥
जनानवेक्षानिरतस्ततश्रिया
श्रिया नयन्ती भ्रममात्तविभ्रमा।
प्रनर्तयन्ती कमल करस्थितं
स्मितोज्ज्वला सा प्रविवेश गोकुलम् ॥७१ ॥
निमेषिणी नैव नितम्बिनी दिवो
निकामरम्या न निशाचराङ्गना।
व्यलोकि नेदृग्वत जातु मानवी[२]
नवीनरूपा रचना विधेरियम् ॥७२ ॥
पुरन्दरश्रीरियमम्बराच्च्युता
घनाद्वियुक्ता चपलेव वास्थिरा।
रतिर्नु दग्धात्मभुवो विना कृता[३]
व्यतर्कि गोपैरथ सा पुर स्थिता ॥७३ ॥
नृपाय दातुं नियत कर स्वय
व्रजाधिनाथे मथुरापुरं गते।
निशेव सूर्येऽस्तमिते महीतलं[४]
विवेश रम्यं भवनं निशाचरी ॥७४ ॥
विशालसौधालिवृते निकेतने
निरीक्ष्य पारेगणन गवागणम्।

१. उत्रे।
२. सन्देह।
३ सन्देहः।
४. उप.व ध्व.।

क्षणं सचित्रा विषसाद सा पुन-[१]
र्मुदिऽसतां नेतरसम्पदीक्षणम् ॥७५ ॥
स्मितैः कियन्तः सकटाक्षवीक्षणै-
स्तडिद्विलोलैः कति नाम विभ्रमैः ।
वशीकृतास्तत्र भृशं दिदृक्षया[२]
निरोद्धुमेना नहि रक्षिण क्षमाः ॥७६ ॥
स नाम मेने निजभाग्यमुज्ज्वलं
तयाऽऽपि सद्यो यदधिष्ठिताऽवनी ।
तथैव रक्षा कति खेद मादधु-[३]
र्यदक्षिमार्गादथ सा तिरोऽभवत् ॥७७ ॥
प्रवेश्यमाना स्वयमेव रक्षिभि-
र्गृहेश्वरीव प्रतिकक्ष्यमादरात् ।
निभालिता वेश्मनि विस्मितैर्जनै-
रवाप मध्यं भवनस्य सा शनैः ॥७८ ॥
ततो मणिद्वीपमिवाङ्कनामयं
गृहं गता मत्तगजेन्द्रगामिनी ।
अचेष्टतालं चिरसंस्तुतेव सा[४]
निसर्गमायापटवो हि योषितः ॥७९ ॥
प्रभावितानोज्ज्वलरत्नकल्पिते
ततो जनन्याः शयने पुरः स्थितम् ।
विलोक्य बालं सहसा शुचिस्मिता
महानुरागेव[५] निजाङ्कमानयत् ॥८० ॥
कुतः कथं केयमहो समागता
न वारिता किं प्रतिहारपालकैः ।
न चिन्तितं यावदिदं जनैः स्वयं
यभार बालं व्रत तावदेव सा ॥८१ ॥

१. अ.न्या.।
२. का लि ।
३. समु.का.लि.।
४. उप.अ.न्या ।
५. उत्पे.।

स रत्नमालाऽभिधया पुराश्रुता
सुता वलेस्तामवयस्त्रिविक्रम ।
रुरोद नो वारयितु स्तनन्धय-
तदीहित प्रैक्षत कौतुकात् परम् ॥८२ ॥
तडित्कदम्बे चिररोचिषि स्थिरा
लभेत चेन्नीरदपोतक स्थितिम् ।
प्रसह्य कृष्णं तुलया स्पृशेत्तदा[1]
सुवर्णवर्णच्छलपूतनाङ्कगम् ॥८३ ॥
तथाविधाकारदुरापदुष्टता[2]
मसशयाना पशुपेन्द्रवल्लभा ।
अदृष्टपूर्वामपि ता शिशोर्ग्रहा-
च्छिशु-ग्रह न स्तिमिता न्यवारयत् ॥८४ ॥
अशक्यभावादवलोकने हते[3]
परावरोधेक्षणकल्मषश्रुते ।
कुतूहलाद्वा नवशंशवोचिता-
द्भयादनात्मीयनिभालनोद्भवात् ॥८५ ॥
द्विजन्महिंसादिकलङ्कपङ्किल
तदानन नापि निरीक्षितु क्षमम् ।
इति प्रकाशीकृतये नु सर्वत
परं दृशौ मीलितवांस्तदा हरि ॥८६ ॥
विदन्नपीमा कितवामशेपवि-
च्चकार तावन्न ■ किञ्चिदच्युत ।
परप्रहारप्रतिकर्मणेव य-[4]
न्निवृत्तिविता प्रहरन्ति साधव ॥८७ ॥

१. अति ।
२ कालि ।
३ इत उत्प्रेक्षा ।
४ का लि ।

निमीलिताक्षाय युगान्तशायिने
स्वयं सहास जननीव वत्सला ।
समर्पयामास विषाचितं स्तनं
विदन्ति किं दुष्टधियो हि किल्बिषम् ॥८८ ॥
इयेष सा तज्जननीत्वमुत्सुका
त्रिविक्रमाद्यद्बलिनन्दिनी पुरा ।
अपूरि कामः पिबता पयोधरं
तदेष रूपान्तरमाप्य शार्ङ्गिणा ॥८९ ॥
विडम्बनामेवमुपस्थिता तया
समीक्ष्य गूढामपि मायिकेश्वरः ।
निवर्तयन्नीदृशपातकात्स ताम्[1]
सतां गतिः शातयितुं प्रचक्रमे ॥९० ॥
शयद्वयेनातिनिपीड्य पूतना-
स्तनं स कोपेन पपौ तथा हरिः ।
निरूप्यमाणैरसुभिः भृशं यथा ।
तथाऽन्वभावि श्लथमर्मसु व्यथा ॥९१ ॥
सुखेन पातुः सविषं[2] जगल्लये
नितान्तमुग्धस्य न तस्य मोहनम् ।
निसर्गकृष्णस्य नवाऽपि कृष्णता-
मथाग्रजोराजविषाणुरादधात् ॥९२ ॥
करौ व्रजस्त्रीसुखदोऽपि शार्ङ्गिणो
बभूव भूयो बकसोदरार्तये ॥
कुमुद्वतीमोदकरोऽपि शीतगोः[3]
करो वियोगिव्यसनाय जायते ॥९३ ॥
प्रयस्य तीव्रं निजमुक्तये वक-
स्वसाऽधमूर्तिस्तदविन्दती फलम् ।

१. यम उ. ।
२ गाकल्येऽव्ययीभाव । क्रि
३ प्रतिवस्तूपमा ।

क्षणेन नैराश्यमवाप्य जीविते[1]
युगान्तजीमूतघटेव साऽनदत् ॥९४ ॥
स्तनन्धयेनाशु-गृहीतचेतनां
मुरद्विषाऽन्ते स्फुटदुत्कटाकृतिम् ।
तनुं त्यजन्तीमतिभैरवं रवै-
रवेदमृ तत्र जनो निशाचरीम् ॥९५ ॥
उदीतवानुन्नतघोषभूभृतो
हरिः स बाल कमलानुरञ्जनः ।
स्फुटज्जपाशोणकरस्तमोरिपु-[2]
र्निनाय नाशं बकयामियामिनीम् ॥९६ ॥
अजाश्रितं लोलशिख सदागति-
प्रियञ्च निर्वापयितु विषेण तम् ।
उपेत्य सन्तप्य तदीयतेजसा[3]
परामृशन्ती बत साऽऽपकृष्णताम् ॥९७ ॥
रघुपतिरिव ताडकां तरस्वी[4]
स्त्रियमपि लोकहिताय बालकृष्णः ।
निधनमुखमदर्शयत्स कात्या
जगदवतां खलनिग्रहो हि धर्मः ॥९८ ॥
उरो नीलरत्नोपमं धारयन्तं
पुरो गोकुलस्याकुलीकुर्वदन्यान् ।
सम कंससिद्ध्या शयाऽचेतना या
पपाताशु भूमौ वपुः पूतनाया ॥९९ ॥
तथा तास्तास्तस्या रुचिरतरभङ्गी प्रथमत ।
ततो बालक्रीडाकरणमनियोगेऽपि सहसा ।
वपुर्भीमं पश्चान्निधनमवलोक्यामुहदहो
तदाऽऽलेख्यप्रख्या[5] सहपरिजनैः कृष्णजननी ॥१०० ॥

१ उप. ।
२. रूप उपमाध्वनिः ।
३. शब्दशक्त्युद्भवध्वनिः ।
४. उप. । पुष्पिताग्रावृत्तम् ।
५. उप., शिखरिणी ।

कृत्य समाप्य वसुदेवगिराऽऽशु ताव-[1]
न्नन्दादयोऽपि मथुरानगरान्निवृत्तः ।
दूरान्निशम्य विदलच्छतकोटिकोटि-
प्रख्यं स्वन मुमुहुरच्युतचिन्तयाऽलम् ॥१०१ ॥
कात्योरसि स्फुटशिलाफलकप्रमाणे
क्रीडापरं हरिमभीकमवाप्तसञ्ज्ञा ।
संज्ञाय विस्मयमुदम्बुधिपूरमध्ये
घोषौकसः सुचिरमेकरसा ममज्जु ॥१०२ ॥
दृष्ट्वाऽधनी निधिमिव प्रतिपन्नसंज्ञौ
वेगादुपेत्य पितरौ नितरामथोत्कौ ।
आनन्दबाष्पपरिपूर्णदृशौ कथञ्चिद्
दोर्भ्यां दृढं जगृहतु प्रणयेन कृष्णम् ॥१०३ ॥
अयं मायादेवी-सुकृतिपटली-मौलिमहित-
प्रथी-विद्यानाथ-प्रभव-बदरीनाथ-रचिते ।
महाकाव्ये सर्गः कलुषमुपि राधापरिणये
तृतीय.[2] श्रीवाणीमनु-जपनजन्मन्यवसित. ॥१०४ ॥

*इतिश्रीराधापरिणयमहाकव्ये कृष्णांके पूतनाशातनो*
*नम तृतीयः सर्गः सम्पूर्णः ।*

१. यम.उप.,इन्तिसु वसन्ततिलकम् ।
२. नवार्णो मनु । शिखरिणी ।

*॥ इति प्रभाया तृतीयः सर्ग सम्पूर्ण ॥*

## अथ 'शकटदिष्टान्तो' नाम
## चतुर्थः सर्गः।

अथ लसति तृतीये जन्मभे जातु सूनो-[1]
सह निपुणतमाभिर्गोपसीमन्तिनीभिः।
अवनिसुरवितीर्णैर्मन्त्रपूतैः पयोभि-
र्व्यरचयदभिषेकं श्रेयसे घोषराज्ञी ॥१॥
प्रकृतिधवलमम्भ कृष्णकायानुषङ्गा-
दलभत सहसाभां नव्यदूर्वासगर्भाम्।
मरकतमयभूमीचुम्बनादिन्दुबिम्ब[2]
सितमपि नितरा द्रागेति पालाशभासम् ॥२॥
द्विगुणितरुचिमाज्यं कृष्णवर्त्मेव कृष्ण[3]
सहजविमलधामाऽऽप्यासमसादाभिषेकात्।
सुभगमपि निकामं वस्तु सामर्थ्ययोगा-
दुपनयति हि लक्ष्मीं संस्कृतिः काचिदन्याम् ॥३॥
शरदुपहितराकानाथशोभासनाथं[4]
नवजलधरबिम्बं मौक्तिकं रावितं चेत्।
मुररिपुवपुरम्भोबिन्दुभिः सम्परीतं
स्मितविशदमुखाभ शक्नुवीतानुकर्तुम् ॥४॥
स्नपनविधिविरामे प्रोञ्छित स्वाञ्चलेन
प्रियतनयमुदुह्य क्रन्दनोच्छ्वासभाजम्।
शिशिरतरतदङ्गान्यामृशन्ती हसन्ती,
स्तुतकुचयुगदानात्तोषयामास माता ॥५॥
युवतिमधुरगीतैर्मञ्जुलातोद्यनादै-
रुपचितमसमत्वं पर्व तत् सर्वथाऽगात्।
कुशकुसुमसमिद्भिः सर्पिषाप्लाविताभि-
र्हुतभुजमधिवास्यातर्पयन् यत्र विप्रा ॥६॥

१. सर्ग आरम्भतः ८ श्लोकपर्यन्तं मालिनीछन्दः।
२. प्रतिवस्तूपमा-तद्गुणौ।
३. अ.न्या.उप।
४. अति।

विधुरिव परिपूर्णः कान्तिभिः सिन्धुपूरं[1]
तरणिरिव समृद्धं पद्मषण्डं प्रभाभिः ।
द्विजवरनिकरान्तर्दक्षिणो दक्षिणाभि-
र्निरतिशयविकासं नीतवानाशु नन्दः ॥७ ॥
सकलनिनदमुग्धज्जृम्भमापीय दुग्धं
मुखकलितकुचाग्रं केशवं निद्रितं द्राक् ।
निभृतमुपनिधाय प्राज्यतल्पे विनीता
व्यतनुत वरिवस्यां प्राघुणानां यशोदा ॥८ ॥
चतुरचरमुखेभ्यस्तावदाकर्ण्य कृष्णा-
न्मधुपुरपुरुहूतः पञ्चतां पूतनायाः ।
अहिरिव पदमृष्टो निश्वसन्दीर्घमुष्णं[2]
कलुषमतिरधृष्योऽमर्षमुच्चैरभार्षीत् ॥९ ॥
विफलविषमयत्ने प्रत्नवैरे मुरारौ
परिभवमसहिष्णुः कूटनीतिप्रतीतः ।[3]
झटिति तदवसानं श्रेयसे मन्यमानो
व्यमृशदकृशकोपोद्दीपितो दैत्यनाथः ॥१० ॥
अवितथवचसाऽसौ नारदेनोक्तपूर्वं
पुनरपि हरिरेव क्रूरकर्माऽवतीर्णः ।[4]
असुरकुलविघातं कर्तुमास्तेऽन्यथा को
मनुजशिशुरयत्नं पूतनां हन्तुमीशः ॥११ ॥
क्व पुनरचिरजन्मा गोपबालोऽसहायः ?
क्व च विपुलबलायाः पूतनाया निपातः ?
दुरवगममहिम्नश्चित्रकृत्यस्य नित्यं[5]
बत नियतमशक्यं किं विधातुर्विधातुः ॥१२ ॥

१ मालोपमा ।
२ अनु उप ।
३. काव्यलिगम् ।
४. अनुमिति ।
५ विशन्, अ न्या. ।

मदुपहितविपद्भ्योऽबिभ्यदार्भारडिम्भ-[१]
स्त्रिभुवनविभवे योऽद्रुह्यदुन्नह्यमह्यम् ।
तमवसितिमनीत्वा सत्वरं स्वैरुपायै-
र्न पुनरथ कदाचिद्धीतशकश्शयिष्ये ॥१३॥
तदिह दनुजराजीधूमकेतौ विचित्रा[२]
रचयति बहुमाया प्राकृताचार्य्यवीर्य्ये ।
द्विपति पशुपपोते रहसोज्जृम्भमाणे
सुभटशकटरक्ष प्रेषण क्षेमकृन्मे ॥१४॥
इति मनसि मनस्वी शध्रदाधाय कंसो
विकटवपुषमारादास्थितं स्निग्धवर्यम् ।
त्रिदशविजयलक्ष्मीसन्ततालिङ्गिताङ्ग
शकटमलघुमानाद्दानवेशोऽन्वपश्यत् ॥१५॥
स सदसि निजभर्तुः श्लाघ्यया दृष्टिवृष्ट्या
दुरुपगममपूर्वं गौरवं लभ्यमान ।
विकसितमुखकान्तिस्तस्य वाञ्छन्निदेश
फणिरिपुरिव विष्णोरग्रतस्तावदस्थात्[३] ॥१६॥
प्रचलदलघुघोण शोणविस्फारिदृष्टिः
प्रकटकुटिलदंष्ट्रादष्टनिष्कुञ्चितोष्ठ ।
भटपटलपटिष्ट द्विष्ठगोष्ठेशपुत्र[४]
शकटमतिशठात्मा प्रेष्ठमावष्ट कंसः ॥१७॥
शकट ! सपदि घोषे नन्दगोपस्य सुनु
कलितकपटवेषं नामशेष विदध्या ।
परिणतिमतिघोरा राजवैरस्य सद्यो
यदयि दयित ! लोका सम्यगालोकयन्तु ॥१८॥
अहरहरहहास्मद्बन्धुनाशाय शश्व-
न्निरवधि यतमाने मायया चासमाने ॥

१ अनु ।
२ स्प अनु ।
३ नप ।
४ अनु ।

शिशुरिति करुणा ऽस्मिन्नैव कार्य्या कथंचिद्
भवति हि[१] कुशलाय क्रूरतैव प्रतीपे ॥१९ ॥
न च कुरु विचिकित्सा वीर ! वैरे मुरारे-
रिह सृजति हि साक्ष्य पूतनाप्राणनाश. ।
अपितु पितुरुदात्ता शूरतामुग्रकर्म-[२]
ण्युपनय नयनिष्णो विस्मृतिं विक्रमैस्त्वम् ॥२० ॥
असुरविसरमूलोच्छेदनित्यप्रवृत्ते
फलमुचितमिदानीमेव दत्त्वाऽलमस्मै ।
उपगतमतिचन्द्रोदञ्चदक्लान्तकीर्तिं[३]
विजयसुभगमूर्त्तिं त्वा पुनर्द्रष्टुमीहे ॥२१ ॥
रिपुमधिपनियोगाद्गच्छतो निग्रहीतु[४]
जनयतु जगदीशश्शाश्वत माङ्गल ते ।
अनुभवतु च तापं दुस्सह शोकवह्ने-
र्भृशमनृजुरहर्य्यु वैरिणो बन्धुवर्ग ॥२२ ॥
इति नृपतिनिदेश शृण्वतस्तस्य मार्ग
गदितुमिव पुरस्तादेव रोमाण्युदस्थु. ।[५]
विकचनलिनलीलामाक्षिपत्कि च चक्षु-
र्युगलमतिविकास मानस स्वाचचक्षे ॥२३ ॥
स्वयमतिबलदृप्त क्रूरमल्लो निसर्गा-
दमुरपरिवृढाज्ञादीपितोत्साहसारः ।[६]
अभिमतहरिहत्य सोऽवमत्यान्तरायान्
व्रजमनुपदमेत्याचिन्तयन्[illegible]पम् ॥२४ ॥
मरणमगणयन्तो दुष्कर भर्तृ[illegible] ग[७]
निजहितमिव भृत्या ये द्रुत साधयन्ति ।

१ अ स्था. ।
२ समकरर्थ्यांक्ते ।
३ निद ।
४ कालि ।
५ उत्प्रे निद. ।
६. अनुप्रा. मधु. ।
७ इतो भावध्वनय. ।

न पुनरिह पर ते किन्त्वमुत्रापि भूय
स्तवशबलमनीचैरास्पद भूषयन्ति ॥२५ ॥
तदहमविहितास्थो जीवितेऽपि स्वकीये
दनुजपतिहितार्थ नित्यलोक प्रवृत्त ।
परमिह भटलक्षै रक्षिताया समन्तात्
कथमथ पशुपेन्द्रद्वारि कुर्य्या प्रवेशम् ॥२६ ॥
यदि कलहममीभि प्रारभे शौर्य्यदर्पाद्
भवति ननु तदानीं दुर्घट स्वामिकार्य्यम् ।
अपि बत कथमेतान्दर्शयन्दैन्यमुद्रा
सविनयमनुयाचे वीरमानी प्रवेशम् ॥२७ ॥
अथ युगपदमीषा सम्भवी न प्रमाद ।
प्रचुरधनभृतानामस्तु भेद कथ वा ।
तदिह परमपश्यन्निष्टसिद्धेरुपायं
सदपि जवनिकान्ता शाम्बरी[1]-मावृणोमि ॥२८ ॥
इति विहितविमर्श क्षिप्रमन्तर्हितात्मा
व्रजपतिभवनान्त स्वैरमेष प्रविष्ट ।
अनमि[2] गुरुणि जीर्णे लम्बमाने मुरारे-
रुपरि, जडशरीरे जीववत्सन्यभत्त ॥२९ ॥
सफलशकटनामा वज्रसारीकृताङ्ग
पतितुमथ मुकुन्दे दानवे यावदैच्छत् ।
द्रुतमपगतनिद्र स्तन्यकामो जनन्या
परमनवदधत्या[3] सत्कृतिव्यापृतायाम् ॥३० ॥
इतरशिशुवदुच्चै रोदितु सम्प्रवृत्त
शकटकपटलीला नेतुमिच्छुर्विरामम् ।
नलिनमृदुलमुग्धमञ्जुमञ्जीरशिञ्ज[4]
पदयुगमुपरिष्टादेष चिक्षेप तावत् ॥३१ ॥

१ मायाम् ।
२ शकटे । उप ।
३. पालि । युग्मकम् ।
४ अनु ।

अविदितपरवीर्यो भोजराजानुयायी
स्वयमखिलजनानां दारुणो निग्रहीता ।
गिरिरिव हरिणाऽसौ ताडितस्तेन गदं[1]
प्रथममनुबभूव प्रत्यनीकप्रहारम् ॥३२ ॥
कमपि निरपराधं द्वेष्टि यो दुष्टचेता
पतति नियतमस्मिञ्छासितुस्तीव्रदण्डः ।
इतिनयमनुकूलं शिक्षयन्दुर्विनीतान्
सरभसममुरं तं ताडयामास कृष्णः ॥३३ ॥
चरणकिसलयं श्रीपूतनारेरुदस्तं
सकुतुकमुपनीतं पश्यतां खेचराणाम् ।
सुरसरणिनिविष्टोपेन्द्रपादारविन्दं[2]
स्मरणममलमन्तस्तूर्णमेवाललम्बे ॥३४ ॥
क्षणमकलयदार्तः स्वर्णवर्णं समस्तं
भुवनमथ स दैत्यश्चक्रवद्घूर्णमानम् ।
तदनु तिमिररूपं चेतनाया क्षयन्त्या[3]
यतिरिव ननु पूर्णब्रह्मनिष्ठोऽनु शून्यम् ॥३५ ॥
प्रसभगलितसत्त्वः शीर्णसर्वाङ्गसन्धि-
श्लथितवपुरमन्दं विह्वलश्शुष्ककण्ठः ।
इषुरिव धनुषाऽसौ प्रेरितस्तेन दूरा-
दधिधरणि सरावं दानवः सम्पपात ॥३६ ॥
पतति सरयमस्मिन् वेपथुं व्याप भूमि[4]
गगनमनलरोचिः पांशुराशि दिगन्तान् ।
ध्वनिरशनिसहस्रस्फोटदीर्घस्त्रिलोकीं
व्रजजनहृदयश्च श्रीहरेः क्षेमचिन्ताम् ॥३७ ॥
बलवदशुभशङ्काशून्यचित्ता स्खलन्ती
कथमपि जननी श्री पुत्रमभ्येत्य वेगात् ।

१ अदि.।
२ स्मृतिः।
३. पर्दे।
४ दीप्त्वम्।

रुदितकलुषिताक्षं तं परिष्वज्य दोर्भ्यां[१]
व्यतरदमृतमुग्धं प्रीतिसम्पाति दुग्धम् ॥३८ ॥
श्रुतविषमनिनादो घोषराजोऽतिदूराद्
दनुजकृततनूजामङ्गलं सशयानः ।
रणरणक-निकामप्रेरितो धावमानः
श्लथवपुरुपसृत्याह्वाय सम्प्रैक्षतामुम् ॥३९ ॥
विकटरवमकस्माज्जातमाकर्ण्य सद्य-
स्तदुपजननिदानं ज्ञातुमाबालवृद्धम् ।
विपदुपगमशङ्काव्याकुला गोकुलस्था
प्रविविशुरनिरुद्धा गोपभर्तुर्निकेतम् ॥४० ॥
विशकलितवरूथं कूवरभ्रंशदभ्र
दलितरदनुकर्षं भग्ननाभिच्युतारम् ।
प्रतनमवसिताक्षं वीक्ष्य भूपातभुग्नं[२]
शकटमतिवितेरुर्विस्मयायान्तरं ते ॥४१ ॥
इदमिह गृहमध्ये लम्बितं दीर्घकाला-
दचलमलघुतुङ्गं शैलवत्संहताङ्गम् ।
शकटमवनिपृष्ठेऽपातयत्को बलीया-
निति मनसि चिरायाभावयन् गोप्टनिष्ठा ॥४२ ॥
शकटमिदमनेन क्रन्दतोत्क्षिप्तपद्भ्या-
मभिहतमतिदूरे पातितं नः समक्षम् ।
इति यदपि यथार्थं व्याहरन्नर्भकास्ता-
नविदितमहिमानः किन्तु ते न प्रतीयुः ॥४३ ॥
अतिरुदति मुकुन्दे दुर्ग्रहावेशशङ्का
तरलितमतिरम्बा क्षिप्रमाकार्य विप्रान् ।
स्नपनमुखमशेषं दोषशान्त्यै यथावत्
पुनरपि गुरुभक्त्याऽकारयत्स्वस्तिकृत्यम् ॥४४ ॥
चिरपरिणतवाणी सत्यमाप्तोक्तिसिद्धि-
र्व्यतिकरपरिणूता स्वस्तिकर्मावसाने ।

१. प्रय ।
२. पर्यदन्तम् ।

प्रणिहितमनसा स्वर्गीश्वरे भूसुरेन्द्रा
व्रजनृपतनुजाय स्वाशिषस्ते वितेरुः ॥४५ ॥
शरदृतुरिव तोयं निर्मलाम्भोधरौघः
पिकनिकरमिवाम्रो मञ्जरीभारनम्रः ।
द्विजनृपभशुभाशीराशिराशु प्रसन्नं
व्रजपरिवृढसूनुं सूनृतं सुष्ठु चक्रे ॥४६ ॥
पुनरनुपदमङ्के क्रीडति श्रीमुकुन्दे,
स्फुरति हरिदिगन्ते चक्रवाकीव भानौ ।
प्रमदभरममन्दं विन्दती नन्दपत्नी,
व्यसजदलघुपूजातोषितं विप्रवृन्दम् ॥४७ ॥
स्मृतिनिहितयशोदास्वार्जवोदारभाव-
प्रसरदसमसीमातिक्रमस्फीतचित्रा ॥
हरिचरणसरोजद्वन्द्वसंसक्तचेतो-
मधुकरनिकरा रव सच जग्मुर्द्विजास्ते ॥४८ ॥
शिशुविशसनसारारासयक्रूरवृत्ते-
र्निभृतमनसि जीर्णो रक्षसोऽस्य प्रवेशम् ।
विनशनमपि सद्यः कृष्णपादाभिघातात्,
सकुतुकममरालि र्व्योमयानादपश्यत् ॥४९ ॥
प्रतिपदमथुरेशक्लेशिता साभ्यसूयाः
शकटकपटवृत्ते वीक्ष्य सद्यः फलं ते ।
व्रजपसुतनृशंसोज्जासमनोत्साहवृद्ध्यै
मुमुचुरतनुहर्षं खेचरा पुष्पवर्षम् ॥५० ॥
प्रकृतिमृदुनि चित्ते यत्र देवाङ्गनाना,
स्थितिमभजत कृष्याध्वसयत्लेक्षणाद्यैः ।
असुरमरणसाक्षात्कारतस्तत्रतूर्णं[१]
प्रसभमुपससाद प्रीतिरेव प्रतिष्ठाम् ॥५१ ॥
अनुदिनमपि यस्य योगिवृन्दं प्रयस्यत्
क्षपयति कतिकायास्नामसौ धातुकात्मा ।

१ पर्याय ।

जननिधनलीलाशालिसंसारपाशा-
दलभत वत मुक्तिं कृष्णचन्द्रप्रसादात् ॥५२ ॥
तदधमतमदैत्यारब्धमेकान्तनिन्द्य
यदि भगवति वैरं मुक्तिमेव व्यतारीत् ।
अथ किमु कथनीयं निर्निमित्ताश्रिताया[१]
सुकृतिविमलचित्तोज्जृम्भितायास्तु भक्तेः ॥५३ ॥
कथमपि जगदीशे देहिना चित्तबन्धो
यदि भवति तदानीं मोक्षमेव प्रसूते ।
अमहितविधयाऽपि न्यस्यमानः प्रदीपे[२]
जनयति तिमिरान्तं ज्योतिरुत्कर्षयोग ॥५४ ॥
इयदुचितविचारस्रोतसा विस्मयाब्धेः[३]
शकटदनुजमोक्षप्रेक्षणोत्थस्य पारम् ।
हरिमहिमविशेषावोधधाराधमग्न-
प्रतिमदिविषदोघस्वान्तमह्लाय निन्ये ॥५५ ॥
शकटमनु तदङ्गं साधु सय्योज्य रक्षो-
व्यपगमलघु किञ्चित्तन्निसर्गादरिष्टम् ।
व्रजनृपतिनियोगात्पूर्ववद् गोपपल्ला
विहित-बहलयत्ना स्थापयाञ्चक्रुरुच्चैः ॥५६ ॥
तदनु[४] दनुजराजो नन्दपुत्रेण सद्य
शकटमपि निरस्तं शुश्रुवान् विश्रुतौजा ।
हृदि जलधिगभीरे दुस्सहं वाडवाग्ने
सहचरमिह तापं कोपजं कामपुहे ॥५७ ॥
अवमतिमतितीव्रामात्मनो गोपडिम्भात्,
प्रसभमसकृदाप्तां भावयन् भोजनाथ ।
तरुरिव भृशमीषच्छिन्नमूलश्चकम्पे[५]
चिरमभृत च नैरं सैरिभासृक्सवर्णे ॥५८ ॥

१ अर्थापत्ति ।
२. प्रतिवस्तूपमा ।
३ रूपक ।
४ इतरगुणावर्तविधानवर्णनम् ।
५ उपमोपम्यन समुच्चय ।




क्षितिवलयमखण्डं रोषवह्नौ जुहूषो-
रपि समरमभियोगं शश्वदालोच्य मोघम् ।
बलवृहदभिमानं बिभ्रतोऽप्यस्य तर्क-
मनसि दनुजभर्तुः प्रादुरासन्नथैवम् ॥५९ ॥
कलयति परमेशः साम्प्रतं नूनमस्मद्-
विषमनियतियोगात्सर्वथा प्रातिकूल्यम् ।
मुहुरयमकृताशोऽप्येवमाभीरपोतो[1]
निधनजलनिधौ यन्मज्जयत्याशु दैत्यान् ॥६० ॥
किमुत विविधजन्मारब्धकिर्मीरकर्म-
प्रबलनिगडगत्याऽल्पायुषः पूतनाद्याः ।
पशुपपृथुकरूपं प्राप्य किञ्चित्त्रिपिन्न,
तृणमिव मम भृत्यास्तत्यजुर्हन्त देहम् ॥६१ ॥
उत सुविदितवीर्यो नन्दसूनुस्स्वरूप-
त्रिदशकुलसपक्षश्चाटुकारैरमीषाम् ।
ज्वलदनलमिवाम्भो दृप्यदोजस्विरक्षो-
विसरमशमयद्वा छद्मना पद्मनाभः ॥६२ ॥
कृतमधिकवितर्कैर्नन्दगोपस्य पत्न्या,
स यदि सुरसनाभिः पद्मनाभोऽवतीर्णः ।
इदमसुरभटानामग्रणीः प्रेष्य नूनं
तमपि खलु तदाऽहं शिक्षये आत्मलीलाम् ॥६३ ॥
प्रतिकृतिमथ तत्र स्वानुरूपां विधित्सुः
प्रतिभटसहजनिघ्न कौणपेशोऽस्तविघ्नः ।
जितरिपुभटभूयोगीयमानप्रशस्ते-
रनुपदनुजराजेराननं प्रागदर्शत् ॥६४ ॥
प्रकृतिरनुचराणामोजसामद्वितीयो,
निधिरसुरवरेण्यो लब्धसिद्धिः समीके ।
सुहृदिव बहुमानो यस्तृणावर्तनामा,
हरिहननधुरां स स्वामिभक्तो मुदाऽधात् ॥६५ ॥

१ अनु. ।

त्वरितगमनमिच्छन्नेत्य वात्यात्मभावं,
व्रजमनु दनुजाग्र्य कौतुकेन प्रयातः।
प्रचुररयभरेणावर्तनाद्यस्तृणाना-
मभृत समुचितार्थां स्वां तृणावर्तसंज्ञाम् ॥६६ ॥
वियति विततपक्षान् पक्षिणो विक्षिपन्त,
क्षतसरणिगवृक्षं राक्षसं प्रेक्ष्य तार्क्ष्य.।
स्यदमदमयुयुक्षु मंक्षु वैलक्ष्यलक्ष्म
क्षपयितुमपि साक्षादक्षम क्ष्मा चचक्षे ॥६७ ॥
ध्रुवमखिलजनाना स्वान्तमत्र स्वकीय,
द्रुततरगतिगर्व सर्वथाऽखर्वयिष्यत्।
यदि निरुपमरहश्शालिन त प्रयान्त
कथमपि धृतचक्षु दैत्यमालोकयिष्यत् ॥६८ ॥
अधिगतिरयमस्माद्भङ्गमप्राप्तपूर्वं
तरसि निरुपमानोऽप्याशुगोऽवश्यमाप्स्यत्।
यदि न दनुजधुर्य्य स्वामिकार्य्येण दैवा-
दयमपलपितात्मा तस्य तादात्म्यमैष्यत् ॥६९ ॥
तृणनिकरधरित्रीधूलिशुष्कच्छदौघै-
रतिगतिरययोगाच्चक्रवद् भ्राम्यमाणै ।
गुरुविकटमरूपस्यापि रूप स वायो-
र्द्रुहिणमिव विलक्ष कर्तुमाविश्चकार ॥७० ॥
पथि स गतिजवेनोत्पाटयन् सन्निकृष्ट
विटपिपटलमुच्चैश्चूर्णयन्नद्रिपारात्।
सपदि दश दिशश्चापूरयन् भूरजोभि[१]
प्रलयपवनलीलां दुर्विनीतो व्यतानीत् ॥७१ ॥
तदवधिमवधीर्य्य स्वेच्छयेवाद्य किंवा,
नयति लयतमिस्रामीश्वरो विश्वमेतत्।
इति सभयमकाले चण्डवात्याप्रयुक्तां,
विपदमनुभवन्तोऽचिन्तयन् गोष्ठवृद्धा ॥७२ ॥

१. निदर्शना।

अभजदहह दैवाद्यस्तृणावर्तवर्त्म
क्षणमपि निरुपायश्चेतनो नन्दघोषे ।
उपलशकलशाखाशर्कराभि स विष्वग्
भृशमभिहतगात्रो जीविताशाममुञ्चत् ॥७३ ॥
किमधिकमधिगोष्ठ ये गृहेष्वप्यतिष्ठ-
न्नुपसृतमतिवेगाद्वीक्ष्य त भीमवातम् ।
उपरि सदनपातं तर्हि सम्भावयन्त
स्वजनसखिसमेता स्नाग्बहिस्ते निरीयु ॥७४ ॥
पथि स परिसरस्थान् पीडयन् सर्वजीवान्
सपदि पदमपूर्व गोपभर्तु प्रपेदे ।
जलनिधिपरिणाहभ्राजिते यत्र शेते
मृदुलधवलतल्पे शेषकल्पे मुकुन्द ॥७५ ॥
तदवधि विधियोगान्नोकुले जागरूक,
तनुजमतिविलोल वत्सलाङ्के वहन्ती ।
रुचिरमनुचरीभि साध्यमानानि विष्वक्,
पशुपनृपतिभार्या गेहकार्याण्यदर्शत् ॥७६ ॥
शकटभिदनुकूल त तृणावर्तहत्या-
प्रसरमुपसरन्त प्रेक्ष्यमात्र कनिष्ठ ।
शिशयिषुरधिभूमि स्वीयकायस्य सद्यो,
विगलितपरिमाणं वर्धयामास भारम् ॥७७ ॥
तनयतनुगरिम्णा पीड्यमाना नितान्त,
कुसुममृदुशरीरा कातराऽऽभीरराज्ञी ।
निमिषमपि निजाङ्केधारणायामशक्ता,
त्वरितमवनिपृष्ठेऽतिष्टिपत्प्रेष्ठमेनम् ॥७८ ॥
मणिमिव वरमेकागारिक-[१] कृष्णमारा-
न्निहितमजिरमध्ये वीक्ष्य दैत्योऽन्तरीक्षात् ।
घटितविकटवात्या-मण्डलान्तस्थरूपः
सरभसमपहृत्य प्राद्रवत्तूर्णमूर्ध्वम् ॥७९ ॥

१. चोर ।

स्फुरदवनिरजोभिर्मुष्टदृष्टिः पुरस्ता-
दपि हरिहरणं तत्सा तृणावर्तकृत्यम्।
प्रविपदपनिनीषातन्यमानेशचिन्ता-
प्रसितमतिरवेदीन्नैव किञ्चिद्यशोदा ॥८०॥
असुरस्य नभोगमेन किञ्चित्-[१]
क्षितिवात्याविरतौ दृशोः प्रकाशम्।
उपलभ्य नितान्ततान्तचित्ता,
प्रथमं बालकमन्वियेष माता ॥८१॥
पृथुकं सहसा पुरो विलोनं,
मृगयित्वा परितोऽवकेशियत्ना।
रुदती कुररीवदेकतोका,
बत लोकान् विकलीचकार गोपी ॥८२॥
व्रजराजवधू र्दृगम्बुजाभ्या-
मथ मुक्तासरसोदराश्रुधारः।
सुतविप्रयुता समुत्सृजन्ती
विधिमाक्रुश्य चिराय पर्यदेवीत् ॥८३॥
हतदैव! मदर्थनाभिरेकं,
ननु सूनुं स्वयमेव दत्तपूर्वम्।
हरतः पुनराशु ते न लज्जा,
करुणा वा विमुखी चकार चेतः ॥८४॥
अवितैव्रविधिं विधे! तवागौ
प्रभवेत्साधु यशो ध्रुवं विधातुम्।
जननीमपहाय मा पुरस्तात्,
तनयस्यात्र शिशोस्तु यो विलोपः ॥८५॥
अयि वत्स! विसृज्य मातरं,[२]
विकलां मां भवदेकजीविताम्।
स्तनपः पुनरद्वयस्य हा!!
गमनं किं त्रिदिवस्य साम्प्रतम् ॥८६॥

१ इतो मालभारिणीपञ्चकम्।
२ इतो वियोगिनी-चतुष्कम्।

अधुनैव पुरो महीतले,
निहितस्त्वं हतभाग्यया मया ।
क्वनु हन्त गतोऽसि पुत्र ! यत्,
परितोऽन्वेषणयाऽपि नेक्ष्यसे ॥८७ ॥

परमङ्गलवद्धमत्सरै-
रमरैर्नन्दन ! चोरितोऽसि किम् ।
असुरैरथवाऽतिघातुकै-
र्ननु नीतो वत नामशेषताम् ॥८८ ॥

मधुरस्मितमुग्धमुग्धस,
ललितस्निग्धवलाशिखञ्जनम् ।
अधुना भवतस्तदानन,
वद पुनः प्रेक्ष्य दधामि धीरताम् ॥८९ ॥

इत्थं मुकुन्दजननी विलपन्त्यजस्र[1]
राद्योविदीर्णहृदयेव मुमूर्छ यावत् ।
तावन्नभोगतिरतीत-पतत्रिवर्त्मा
वेगाद्बभूव मथुराधिपदैत्यभृत्यः ॥९० ॥

दैत्येन हन्तुमनसोपरि नीयमान-
स्तासादिवाग्रयवकुञ्चनकृन्मुरारिः ।
आसज्जयद्रुरुणमेचकनागपाश-
सङ्काशमाशु भुजमण्डलमस्य कण्ठे ॥९१ ॥

व्यासक्तमम्बुधरकोमलकान्तिपूर
दूरं स्फुरद्भुजयुगं ननु कैटभारेः ।
रक्षोगलेऽतिविमलेन्द्रमणिश्रितश्री-
निष्क्रमा द्विविधा जनयाम्बभूव ॥९२ ॥

व्योमसञ्चरणभीमशरीर-[2]
प्रेक्षणाहितभियं कलयन् सः ।
आत्तकण्ठमपि विक्रमदृप्तो
नन्दनन्दनमुपैक्षत पूर्वम् ॥९३ ॥

१. इतो वसन्ततिलकत्रयम् ।
२. इत स्वागताद्वयम् ।

कृष्णपाणियुगपीडितकण्ठो,
दानवो नवविपत्प्रतिपन्न ।
त निरस्य भुवि पातनकाम
काममुग्रमकरोदनुयत्नम् ॥९४ ॥[1]
तीक्ष्णैर्नखै सदशनै कृतक्षतो-
गात्रेषु मुष्टिकुलिशैश्च ताडित ।
तत्याज त न मधुभिन्महीयसा[2]
हत्वैव शात्रवगण हि विश्रमः ॥९५ ॥
प्रसह्य कण्ठग्रहणेन पीडितो[3] निरुद्धनिश्श्वासनिरस्तचेतन ।
सकेशवो भीमवपु र्भमत्तर पपात भूमौ सहसा निशाचर ॥९६ ॥
पथुतनुक्षणदाचरयोपभू-[3]
पतनभूरवमुग्रमतर्कितम् ।
निशमयन्त्यसमं व्रजपुगव-
प्रणयिनी भयविस्मयभूरभृत् ॥९७ ॥
भूपातशीर्णावयवं परासु[4]
दैत्य, तथा तद्गलसक्तबाहुम् ।
श्रीकृष्णमक्लिष्टमथ व्रजस्था
जीवन्तमालोक्य भृश ननन्दुः ॥९८ ॥
करालकालकवला[5]न्मुक्तमालोक्य बालकम् ।
धावमानाऽग्रहीद्दोर्भ्यां वल्लवाधिपवल्लभा ॥९९ ॥
मातृक्रोडमहीपृष्ठ, रक्ष कण्ठ तथाऽच्युत ।
च्युतोऽम्बरतलाद्विजे, मातृक्रोड पुन क्रमात् ॥१०० ॥
इत्थं तृणावर्तममर्त्यवैरिण[6]
वीर निरस्तोऽपि निहत्य कौतुकात् ।

१ ललितावृतम् ।
२ वशस्थम् ।
३ द्रुतविलम्बितम् ।
४ इन्द्रवज्राच्छन्दः ।
५. श्लोऽनुष्टुब्धयम् ।
६. इन्द्रवशाछन्द । विषम ।

॥इति प्रभाया चतुर्थ सर्ग ॥

कृष्णस्त्वकृष्णं प्रथयन्यशोभरं
भूव्योमवासिस्फुरदाशिषोऽभजत् ॥१०१ ॥

अथ 'मायादेवी' -सुकृतिपटलीमौलिमहित-
प्रधी- 'विद्यानाथ' -प्रभव- 'बदरीनाथ'-रचित- ।
गुरुत्वप्रख्याते जगति विदुषा मैथिलबुधै-
र्मते तुर्य्य सर्गो यतिमधृत राधापरिणये ॥१०२ ॥

*इति श्रीराधापरिणयमहाकाव्ये कथांके 'शकटदिष्टान्तो' नाम चतुर्थः सर्गः ।*

## अथ गर्गागमो नाम
## पञ्चमः सर्गः ॥

अथाश्रित प्राकृतिक प्रसादं साद दृशैवापनयन् जनानाम् ।
नानाशुनाक्षिप्तसरोरुहास्ये[१] हास्येन चन्द्रस्य वहन्नभिख्याम् ॥१ ॥
तपोजतेजोऽङ्कुरमूर्ध्वपुण्ड्र-[२] च्छलेन भाले कलयन्ननीह ।
गोविन्दवक्त्रेन्दुसनातनश्री-साक्षाच्चिकीर्षातरलीकृतात्मा ॥२ ॥
गात्रेण निर्मात्रतपोविभूते·[३] पात्रेण वह्निप्रतिभा दधान ।
सितोपवीतो धृतवल्कवासा समेखलः शृखलितश्च मौञ्ज्या ॥३ ॥
नक्षत्रैरिवेन्दु किरणैरिवार्क[४] सारङ्गसारैरिव राजहस· ॥
शुचि विशुद्धैर्यशसाऽभिनीत शिष्योपशिष्यैः परित· परीत· ॥४ ॥
नन्दव्रज किल्विपसादिसर्ग[५] समागमद्भक्त्यभिराद्धभर्ग· ।
निसर्गविश्रम्भितहिंस्रवर्ग· सृष्टि मुकुन्दस्य निशम्य गर्ग ॥५ ॥

### -कुलकम् ।

गोत्राऽवतीर्ण किमय सुधाशु[६] र्गृहीतदेह· प्रथमाश्रमो वा ।
विशुद्धधामा भगवान्नु धर्म्म सुदर्शरूपः किमु चण्डरश्मि ॥६ ॥
आहोस्विदङ्गीकृतकायमायो, भाग्यप्रवेको व्रजपुगवस्य ।
उपैति नामेत्थमिमं दविष्ठ विलोक्य लोका समशेरतादौ ॥७ ॥
कथनु वा गच्छतु दैवताना रमा स्पृशन्नन्यतमत्वमेप ।
सकर्णतंतस्य च दृश्यमाना चक्षुश्श्रवस्त्व ननु बाधते वा ॥८ ॥
तन्मानव कश्चिदय प्रभावानिति प्रतीत्यान्तिकमागतन्तम् ।
अनन्यदीयावयवोपलम्भाच् चिरेण गर्गं निरचैषुरेनम् ॥९ ॥
पाठं परित्यज्य ससम्भ्रम स प्रत्युद्गतो वर्त्मनि धन्यमानी ।
तपस्विनस्तस्य सभ सदस्यै र्ननन्द नन्दोऽपचिति वितन्वन् ॥१० ॥

१ सर्गोपान्त यावदुपजातिच्छन्द· । यम । निद ।
२ अपह्नुतिः । का लि ।
३ अनु । निद ।
४ मालोपमा । अनु ।
५ रूप अन्त्यानुप्रास ।
६ इतो निश्चयान्तमरात्रा ।

सभाजनात्तापसशेखरस्य व्रजाधिराजो न चिरेण लेभे ।
आलोकनात्पर्वशरत्सुधांशोस्तृप्तिं विशिष्टामिव सच्चकोरः ॥११॥
सम्भावितस्वागतमासनाद्यैः प्रसाद्य पाद्योदकसिक्तगात्रः ।
प्रभावविद् वल्लवतल्लजस्तं ततः श्रितप्रश्रितमित्यवादीत् ॥१२॥
पुत्रोद्‌भवेन स्थविरोऽपि मोदं तथाऽनुकम्पाकर ! नान्वभूवम् ।
सतां प्रकामं हृदयङ्गमेन यथाऽधुनाहं भवदागमेन ॥१३॥
त्वदागमानन्दमदोद्‌गमेन क्रमाश्रिताचारविचारहीनः ।
ईदृक् प्रसादस्य मुने ! निमित्तं पृच्छाम्यनौचित्यमचिन्तयित्वा ॥१४॥
न केवलं तापसलोकमेक[1] त्वद्दर्शनं निष्कलुषीकरोति ।
अपि त्वशेषात्सुकृतातिरेकात् सर्गाल्लयं यावदशेषवश्यान् ॥१५॥
कुलं समूलं सुकृतोज्ज्वलं मे धन्यं जनुः सेद्य तथा कृतार्थम् ।
पितृष्वधुर्य्योऽपि मयीदृशं यद् भवानकस्मा विदधेऽनुकम्पाम् ॥१६॥
फलं पुराणस्य सुकर्मणो वा न वेद्मि कस्येदमुदित्वरं मे ।
स्वर्भोगसौभाग्यजुषां पितॄणां किंवा तपांस्येव चिरेण फेलुः ॥१७॥
अशेषकल्याणसुवि स्वतन्त्रे त्वय्यङ्ग ! को नाम शवानुयोगः ।
तथापि निश्शङ्कमनिष्टशङ्कि प्रेमार्द्रमन्तर्मुखरीकरोति ॥१८॥
ब्राह्मण्यतेजः सवितुर्निदाघो हिमागमोऽहः सरसीरुहस्य ।
प्रभातचन्द्रस्य सुधासमुद्रः किमक्षतं तावदये तपस्ते ॥१९॥
योगीश निर्बीजसमाधियोगादनन्यलभ्यां स्थितिमास्थितस्त्वम् ।
परोन्नतिद्वेषि चिराय चेतश्चकर्थ चिन्तास्तिमितं मघोनः ॥२०॥
लब्ध्वा प्रकाशं तुहिनाद्रिशृङ्गात्[2] पुरा सरस्वानिव देवधुन्याः ।
सुखाश्रयः श्रीशशिशेखरास्यादुपाश्रितो ज्यौतिषविद्यया त्वम् ॥२१॥
भरेषु यस्यानवमा प्रसिद्धिः सदासमोहानुचरी च सिद्धिः ।
आलम्ब्यमाना हृदयेन सत्त्वं न सर्वमज्ञेयगुणोऽसि स त्वम् ॥२२॥
निसर्गमान्द्यस्फुरितेन तिर्यक् साम्यं वनेवासितया प्रपन्नः ।
मनोवचोऽगोचरवैभवं त्वां स्तवीतु धीमन् कथमेव मादृक् ॥२३॥
तपोऽतिरेकार्जितदिव्यतेजः साकं द्विजेन्द्र त्वमदिद्युतो मे ।
मुने मनोऽबोधकृतोपरोधं तथाऽततध्यान्तवृतं निशान्तम् ॥२४॥

१ इतो भावध्वनयः ।
२ ज्योतिर्विद्यामूलमत्र ।

लोकानुकूल्याकलनाय लोके सता हि विष्वग्भ्रमण प्रसिद्धम् ।
मा स्वीयवाक्यामृतबिन्दुसेकात् कामं सुखाकर्तुमतोऽर्हसि त्वम् ॥२५ ॥
पुण्यप्रपाकोपहित हित ते न दर्शनं कस्य तनोति कामम् ।
इतिस्वसूनोरपि मङ्गलार्थो त्वया कृत नाम मुने समीहे ॥२६ ॥
मदर्थनाऽथ त्वयि नाथ ! नासावर्हत्यपार्थाभवितुं कथञ्चित् ।
सम्पादन दीनजनेहितानां[1] महात्मना प्राकृतिक हि कृत्यम् ॥२७ ॥
इतिप्रिया चारुमुदीर्य्य वाच वाचय्यंमे वल्लवमण्डलेन्द्रे ।
पयोदनादानुरुवत्कलापिधुर्यानुकारी मुनिराचचक्षे ॥२८ ॥
त्व घोषचक्रेश मनोहराभि मां प्रीणयन् सूनृतभारतीभिः ।
सुधाभिरद्धाक्षरतश्चकोर राकापते सख्यमलङ्करोषि ।२९ ॥
सदा सदाचारविनीतिनीतिख्यातेऽवदाते यशसा कुलेऽस्मिन् ।
त्वमाप्तजन्मा सरसीव हसः कथं नु नैवं समुदाहरेथा ॥३० ॥
विरक्तमप्याप्ततनूजसम्पद् भविद्दिदृक्षा तरलीचकार ।
उपात्तसौख्यान् सुहृदो हि साक्षात् कर्तुं समीहा प्रबला समेषाम् ॥३१ ॥
तप कथ त्वादृशि धर्मशीले साहायक कुर्वति वा क्षतं स्यात् ।
समीरणे सख्यजुषि स्वतन्त्रे कृपीटयोनेरिव दीप्तमर्चिः ॥३२ ॥
विधित्सुरप्यार्य्यमभीप्सित ते त्रस्यामि गोपाधिप ! हन्त कंसात् ।
खला हि लब्ध्वाऽवसर कथचित् प्रतिक्षण व्याकुलयन्ति साधून् ॥३३ ॥
रहोगत क्षेमरत करिष्ये तथापि ते नन्दसुतस्य संज्ञाम् ।
जगद्वितृष्णानपि सेवकाना निर्व्याजभावो हि वशीकरोति ॥३४ ॥
इति प्रतिश्रुत्य रहस्यकार्यीत्तपोधनस्तस्य तनूभवाख्याम् ।
गुर्वीमपि प्रेष्ठजनस्य याच्या किमीशते मोघयितु महान्त ॥३५ ॥
स्वय समेषामपि सञ्ज्ञिना य संज्ञास्त्रिलोकीजनको विधत्ते ।
व्यधत्त तस्यापि मुनि स सञ्ज्ञामहोनु दैवस्य गतिर्विचित्रा ॥३६ ॥
सुखेन यालस्य यथाविधान सम्पाद्य कृष्णेति नवाभिधानम् ।
नामान्तराण्यस्य विभाव्य वाग्मी प्रचक्रमे वक्तुमसौ मुनीश ॥३७ ॥
अन्त प्रसीदन्नितरामनन्त-स्तुतिं विधातु विदितानुभाव ।
[2]रेवाम्वेवायमनल्पशक्तेः सहस्रधारत्वमियेष वाच ॥३८ ॥

१ अन्या । एव परत्रापि ।
२ नर्मदा हि सहस्रधारा ।

तपः प्रतीपागपि यां विगीतामाचार्यतां [1] स्वीकृतवान् पुराऽहम् ।
तयाऽत्र ते नन्द ! तनूजयोगात् प्रशस्तया नापि न सार्थभूयम् ॥३९ ॥
वागीश्वरो, ऽनन्तमुख फणी वा, स्वयं विभु, र्वागधिदेवता वा ।
लभेत चेद्वत्कृपदप्रतिष्ठा- [2] माख्याविशिष्यास्य तदास्युरुक्ता- ॥४० ॥
*कीलालपूर्णेषु कुटेषु भास्वानिव प्रतिस्व प्रतिबिम्बितो य ।*
वपुष्मता हृत्सु निराविलेषु, कथ स मर्त्यैरथमीरणीय॰ ॥४१ ॥
व्रजाधिराज-प्रमदाद्वितीयो, दत्तावधान प्रणयप्रसूत्यै ।
मया कथञ्चित्समुदीर्यमाणा, शृणु स्वपुत्रस्य विशेषसञ्ज्ञा- ॥४२ ॥
असावनन्तावयव समस्त-जगन्मयोऽप्यद्वयमात्रमूर्तिः ।
विराट् [3] सलील सहसा लयादौ, स्वान्तर्विभुर्वासयति त्रिलोकीम् ॥४३ ॥
नन्वेष पद्माकरपद्म शश्वत् सॅव्वाहिताङ्घ्रि विधिनाऽभिनूत ।
शेषे सरित्स्वामिनि कल्पशेषे [4] सदा प्रबुद्धोऽपि सुखेन शेते ॥४४ ॥
अदृष्टचक्रोपनतं क्रमेण प्रसह्य कालाजगरेण गीर्णाम् ।
*अस्यैव नाभीनलिनात् स्वयम्भूः सम्भूय भूय सृजति त्रिलोकीम् ॥४५ ॥*
विशालभोगो भगवाननन्त [5] फटासु राकेशसमच्छटासु ।
गोपेश ! सिद्धार्थमिवाश्रमेण, सदैव भूगोलमय विभर्ति ॥४६ ॥
विद्यानिधि विघ्नविभु र्गजास्य प्रवालभा बालसुधांशुभालः ।
गौरीगिरीशौ पितरौ गणेशो, [6] भूत्वा वताद्यापि निषेवतेऽसौ ॥४७ ॥
सदासदासेवितबालभावा भावात्तगोविन्द-महानुभावाः ।
तिरस्कृताशेषजगत्प्रपञ्च, विरिञ्चजाताः [7] सनकादयोऽयम् ॥४८ ॥

१ गर्गो यदुकुलाचार्य' इति भागवतम् ।
"आचार्यतया सार्थभूयसार्थकत्ता न आपि इति न ।
'भुवो भावे' इति सूत्रेण भूधातो' क्यप्" -सम्पादक- ।
२. अति.।
३. इतोभगवदवताराणा नामानि यथाविराट् ।
४. शेषशायी ।
५. शेष ।
६. गणेशः ।
७ सनक-सनन्दन सनातन-सनत्कुमाराः ।

भक्त्याऽनुयुक्तः सनकादिसिद्धैः पितामहे शृण्वति सावधानम् ।
शशास हंसोऽपि[1] सुरावतंसः स्वोपज्ञमेव स्फुटमात्मयोगम् ॥४९ ॥
हित हिरण्याक्षकदर्थिताना दिवौकसामेव विधातुकाम ।
सुखेन लोकस्थितये रदेन, क्षोणीं[2] वराहावतरे बभार ॥५० ॥
स्वभूयशोगीतिगृहीतवीण [3]श्रीनारदोऽय कलहप्रवीण ।
पितामहोत्सङ्गजनुस्तनु स्वामग्रीभवद्व्यभुवं भवस्य ॥५१ ॥
हिय हडिंभिर्विवर्ष्मशापा स्वायुर्वशीकल्पनयाऽनयद्य ।
चिराय कुर्वन् सनरस्तपस्या [4] नारायण. सोऽयमितो नमस्याम् ॥५२ ॥
विमातृवाग्बाणहतो मनस्वी [5]बालोऽपि कोपज्वलितस्तपस्वी ।
बभूव तारागणचक्रवर्ती लब्धध्रुवव्योमपदो ध्रुवोऽसौ ॥५३ ॥
श्रीकर्दमास्वापतप. फलात्मा [6]सितोऽपि कीर्त्तं कपिलोऽभिधानात् ।
साङ्ख्य समाख्यज्जननीमसङ्ख्यं रसाप्रकारै खलु देवहूतिम् ॥५४ ॥
गुरुश्चतुर्विंशतिमेत्य सिद्ध सुधीरलर्कद्युतिनिर्जितार्कः ।
आन्वीक्षिकी वेदयतिस्म विद्यामत्रेरपत्यं पुनरेष दत्त [7] ॥५५ ॥
चिराच्चरित्वा सुतपास्तपस्या, पृश्निश्च साध्वीकुलमौलिभूषा ।
प्रभानुमेयप्रतिपत्तिमर्भ[8] लेभे तमेनं ननु पृश्निगर्भम् ॥५६ ॥
आसाद्य राकेशरुचं रुचे. प्रागाकूतिराकूतनितान्तपूता ।
प्राज्ञ वतामुं धृतयज्ञसञ्ज्ञं[9] स्वामाशिषा ज्ञातवती कृतार्थम् ॥५७ ॥
मन्वन्तरे वेदशिरा द्वितीये [10]ब्रह्मण्यवर्यं तुपिताभिधायाम् ।
गुणैर्यशोराशिमिवोरुकृत्यामिमं समुत्पाद्य बभूव धन्य ॥५८ ॥

१ हंस ।
२ वराह ।
३ नारद ।
४ नरनारायणौ ।
५ ध्रुव ।
६. कपिल ।
७. दत्तात्रेय ।
८ पृश्निगर्भ ।
९. यज्ञ ।
१० विभु ।

तृतीयमन्वन्तर-भूतिकाम- सत्याश्रयोऽसौ किल [1]सत्यसेनः ।
सूर्यादिवाम्भोजततो विकासो धर्मादुदासीदपि सूनृतायाम् ॥५९ ॥
तुर्ये हरिण्या हरिमेधसोऽयं मन्वन्तरे प्राप्य जनिं तरस्वी ।
हरि[2]र्गजं ग्राहगृहीतमुच्चैश्चक्रेण चक्रे करुणो विमुक्तम् ॥६० ॥
श्रीकश्यपादिन्द्रमिवादितिः प्राग् यशोऽशुशुभादमुमेव शुभाद् ।
वैकुण्ठनिर्माणकृत विकुण्ठा[3] वैकुण्ठमासाद्य परं ननन्द ॥६१ ॥
पयोधिमन्थी विबुधार्थसिद्ध्यै वैराजनाम्नोऽजितकीर्तिदाम्नः ।
सम्भूतिदेव्यामजितो[4]ऽमितौजाः सम्भूतिमासादयदच्युतोऽयम् ॥६२ ॥
चन्द्रादिवैन्द्रीदिगतिप्रकाशं पद्मप्रसादं सरसीव सूरात् ।
नाभेः सुराभादमुमेव लेभे, पुरर्षभ[5] भाग्यवशेन मेरुः ॥६३ ॥
असौ शरण्यो जगतो हितार्थं वहन् हयग्रीववपुर्विरूपम् ।
चक्रेण शक्राद्युपगीयमानो मानोन्नत दैत्यशिरश्चकर्त ॥ ६४ ॥
पुरा पुरादिर्यदुगक्रमोऽभूत्तरभूर्विवेकस्य पृथुः पृथुश्रीः[7] ।
सीदत्प्रजोऽशाद् धृतधेनुलीलां, प्रतीपशीला महिलामिवेलाम् ॥६५ ॥
लये रसाया सलिलाप्लुतायां शृण्वन् पुराणं परमेकचित्तः ।
मीनाकृतेरस्य[8] निनाय शल्के, दिनान्यदीनो मनुरादिराजः ॥६६ ॥
आदित्यदैत्यैरथ मथ्यमाने, पाथोनिधौ तावदधोविशन्तम् ।
दधावयं मन्दरभूधरेन्द्रं, चिरं कठोरे[9] कमठः स्वपृष्ठे ॥६७ ॥
धन्वन्तरि[1]र्व्याधि-पयोधिमज्जन्-महातरिः प्रागयमेव देवः ॥
विचक्षणः क्षेमपरः प्रजानां महौषधीराकलयाञ्चकार ॥६८ ॥
विद्वेषिपीयूषविडम्बनैपी, मोपाविशेषोचितवेषभूषः ।

१. सत्यसेनः ।
२. हरिः ।
३. वैकुण्ठः ।
४ अजितः ।
५ ऋषभदेव ।
६ हयग्रीव ।
७ पृथु ।
८. मत्स्य ।
९. कूर्म ।

स[१] मोहिनीरूपमय युगादावङ्गीचकारामरमङ्गलार्थम् ॥६९ ॥
पितु- प्रचण्डादवितु स्वभक्त, प्रह्लादमाह्लादितसर्वजीवम् ।
स्तम्भादय सम्भृतनृहिरंह- संरम्भवानाविरभू[२]नृसिंहः ॥७० ॥
अमेयकायोऽपि च वामनोऽय[३] पद्मापरीरम्भपरोऽपि वर्णी ।
बाल पुराणोऽपि पुमांश्छलेन क्षिति बलि याचितवानुपेन्द्र- ॥७१ ॥
तपोधनो भार्गववंशकेतु-[४]शिवाद्धनुर्वेदमधीत्य सम्यक् ।
क्रुद्धोऽवमानादसकृत्तरस्वी, नि क्षत्रिया क्षोणिमसावकार्षीत् ॥७२ ॥
पराशरादाप्य जनिन्तथाय[५] द्वैपायनोऽल्पज्ञजनानुकम्पी ।
विभज्य शाखाः शतधा श्रुतीना स भारतं व्यास पुराणवृन्दम् ॥७३ ॥
धराऽसुरापारभरावतारं वाञ्छन् क्षमासत्सुमदामवामः ।
वन दिशन् तात-निदेशनित्य-विधेयतामेष जगाम राम.[६] ॥७४ ॥
जानासि नीलांशुकमुज्ज्वलांशुं यं वल्लवाखण्डल रौहिणेयम् ।[७]
धरापराभूतिहरावतार. सोऽप्यर्भवेष पुनरेष शेष ॥७५ ॥
अयञ्च युष्मत्सुकृतातिरेकात् स्वय प्रभु.[८] पूर्णकलोऽवतीर्णं ।
अङ्गीकृतानङ्गपरार्धकान्तिर्भक्तानुरक्त्यै वितनोति लीला ॥७६ ॥
अगुह्यकीर्तिरथ देवगुह्यात्, सरस्वतीनामनि सत्कलत्रे ।
जातो, वलेनैष महेन्द्रराज्यं श्रीसार्वभौमो[९] बलये प्रदाता ॥७७ ॥
मुक्ताफल शुक्तिरिवाम्बुवाहादायुष्मत. प्राप्य यमम्बुधारा ।
महार्घतामेष्यति सोऽद्भुतस्य भूभोगसम्पादयितर्षभोऽयम्[१०] ॥७८ ॥
विष्वग्यशोव्यासकृदेष विष्वक् सेनाख्यया[११] विश्वसृजो विपूच्याम् ।

१ धन्वन्तरिः ।
२ नृसिंह ।
३ वामन ।
४. परशुरामः ।
५. व्यास ।
६. श्रीरामः ।
७ बलराम ।
८. श्रीकृष्ण ।
९. सार्वभौम ।
१० ऋषभ ।
११ विष्वक्सेन ।

सर्गं स्वयं विश्वसृडप्यवाप्य, स्मरारिसख्यं च विशिष्य कर्ता ॥७९ ॥
अन्वर्थनामा ननु धर्मसेतु[१] र्दिष्ट्याऽऽर्यकाद् वैधृतयोपलब्धः ।
चिराय रत्नाकरचारुकाञ्चीं वसुन्धरामेष वशे विधाता ॥८० ॥
[२]स्वधामनामानमिमं प्रसूय, श्रीसूनृता सत्यसहोऽङ्गसङ्गात् ।
विजेष्यते वल्लवपाल ! नूनं शिवा शिवाप्तद्विरदास्यदृप्ताम् ॥८१ ॥
कीर्त्या बृहत्याममुना बृहत्यामुपेत्य जन्म द्विजदेवहोत्रात् ।
योगेश्वरेण[३] प्रणयानुरोधाद् विधास्यते साधु सुरेशसख्यम् ॥८२ ॥
एवं[४] बृहद्भानुरसौ विताना-सत्रायणाभ्यां जनितोऽजमित्रम् ।
शिवा क्रिया जैमिनिवत् ससत्रास्तातुं तथा सूत्रयिता पुरुत्रा ॥८३ ॥
निवारितश्रौतपशूपघातः कामन्दयावानजनात्मजातः ।
ध्यानैकतानान्तरसम्प्रबुद्ध काले भविष्यत्ययमेव[५] बुद्धः ॥८४ ॥
म्लेच्छप्रायितान् वीक्ष्य महीक्षितोऽथ कल्कि[६] -स्तथा कालकरालरूपः ।
उद्भूय भूयः करवालधारा-जले निमग्नानखिलान् विधाता ॥८५ ॥
तदेष ते किल्वषकूटकर्षी, सुनुर्नवीनाम्बुदनीलदामा ।
अनन्तनामाप्यधुना व्रजेन्द्र ! दधाति कृष्णेति यथार्थसञ्ज्ञाम् ॥८६ ॥
सन्देवनं देवपुरं स्थिताया निशाम्य भूमेः करुणोऽवतीर्णः ।
निपात्य दैत्यानलमेष तस्या निराकरिष्यत्यचिरेण भारम् ॥८७ ॥
द्रोणो भवान्नन्द ! तथा यशोदा, धरा तपश्चेरतुरङ्ग ! यस्मै ।
असौ स भक्तेप्सितपूर्तिवित्तो बभूव पुत्रो भवतो मुकुन्दः ॥८८ ॥
सरीसृपेन्द्रो वत यस्य तल्पं, कल्पक्षये कल्पयति स्वमेव ।
सोऽयं स्वयं स्थावरजङ्गमात्मा, नारायणो घोषपतेऽवतीर्णः ॥८९ ॥
अत्रानुरागत्रिदशद्रुमो द्राग् दीव्यच्चतुर्वर्गफलं प्रसूते ।
यदीप्सया कृत्स्नमपास्य विश्वं, सचेतसः शश्वदिम श्रयन्ते ॥९० ॥
सुखेन शीघ्रं जगतो विमुक्तेरयं हि पन्थाश्श्रुतिसम्प्रतीतः[७] ।

१ धर्मसेतुः ।
२. स्वधामा ।
३. योगेश्वरः ।
४. बृहद्भानुः ।
५. बुद्धः ।
६. कल्किः ।
७ 'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतिः ।

अतोऽप्रमत्तौ प्रमदेन मत्तौ मतोऽधिगत्यामुमल भजेताम् ॥९१ ॥
अत्राङ्ग !पुत्रस्य धिय विधूय, ध्रुव विधत्तां रतिमद्वितीयाम् ।
तरिं विनेवाम्बुधिमध्यदेशो, दुरासदो भक्तिमुदस्य मोक्ष. ॥९२ ॥
पुत्रानुरागादपि वा भवद्भ्यामवाप्तुमर्हं पदमव्ययायम् ।
अज्ञातवीर्यौषधिसम्प्रयोगा[१]-दपि क्षमं लब्धुमनामयत्वम् ॥९३ ॥
सभाज्यभाग्य भवतो व्रजेशौ ! कस्तूर्णमा ! ! वर्णयितुं क्षमेत ।
गोलोकलीलामवहेल्य कृष्णो, जगत्पिताऽप्येव[२] यदात्मजोऽभूत् ॥९४ ॥
तदीक्षमाणो रुचिराश्चिराय, प्रेमोन्मदिष्णू तनयस्य लीला. ।
अन्वर्थयन्तौ वसुधाऽभिधान निरस्तसीमं समयं नयेताम् ॥९५ ॥
कल्याणमस्माज्जगतो हि तस्यादाशास्यमस्यापि कृते किमास्ते ?
लीलावलोकप्रवणीकृतान्तः, परं चिरं नन्दतु भक्तवृन्दम् ॥९६ ॥
इत्थं निगद्य विहितां प्रतिपद्य पूजा[३]-मालोक्य मञ्जुलमुकुन्दमुखारविन्दम् ।
चक्षुर्जनुस्सफलतामतिमन्यमानः, सानन्दमेव निजधाम जगाम गर्ग· ॥९७ ॥
निममज्जतुरञ्जसा व्रजेशा-[४]वथ तौ विस्मयचुम्ब्यमानचित्तौ ।
मुनिपुङ्गववर्णितं स्वसूनो र्महिमानं समवेत्य मोदसिन्धौ ॥९८ ॥
निगमागमदर्शितानुभावे, दृढभाव दधतौ च बालकृष्णे[५] ।
पितरौ सुतरां गतव्यलीकौ, व्रजसाम्राज्यसुखं समन्वभूताम् ॥९९ ॥
अयं 'मायादेवी'-सुकृति-पटलीमौलिमहित-
प्रधी-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचित· ।
मितो बाणै· सर्गो व्यरमदनुभू 'दीधिति'[६]नुते,
महाकाव्ये नव्ये प्रमदकृति-राधापरिणये ॥१०० ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के गर्गागमो*
*नाम पञ्चमः सर्गः सम्पूर्णः ॥*

१. प्रतिवस्तूपमा ।
२. विरोध ।
३. [illegible]
४. मालभारिणी छन्द ।
५. माभा छन्द ।
६. दीधितिर्ध्वन्यालोकविवृति

# अथ 'विश्वप्रकाशो' नाम

## षष्ठः सर्गः

अथाच्छपक्षोपगमे शशीव[1] प्रपद्यमानोऽनुदिनं स वृद्धिम् ।
सनातनः प्राकृतबालभावं, सुखाय पित्रोः प्रभुरभ्यनैषीत् ॥१ ॥
निविष्टसिद्धार्थसनाथमूर्धा[2] प्रबद्धरक्षागुणकण्ठकम्बुः ।
अधृष्णुरुत्तानशयोऽधिदोलं, स्थितो ददर्शायतनं स लोलम् ॥२ ॥
अलिन्दकेऽमु सुमकल्पतल्पे, शयानमुत्तानमवेक्षमाणः ।
पयोनिधौ पर्णपुटे स्वपन्त[3] धियाऽच्युतं व्योमचराश्चुचुम्बुः ॥३ ॥
विलिप्य दृक्खञ्जनयोरजस्रं, श्रियं प्रसूरञ्जनमच्युतस्य ।
प्रसिद्धमापामरमेतदीयं, निरञ्जनत्वं तिरयाञ्चकार ॥४ ॥
तदाननेऽमङ्गलदृष्टिदोष-क्षयाय मात्रा रचितोऽल्पलक्ष्यः ।
अशाश्वतः कज्जलबिन्दुरिन्दौ, स्फुटं स्थिरं लाञ्छनमत्यनिन्दत् ॥५ ॥
स्थिरीकृतात्मा मकरन्दलोभा[4]-दलिर्यदीन्दीवरमाश्रयेद्वा ।
तदाकृतं कृष्णललाटपट्टे विडम्बयेत्कज्जलबिन्दुमीषत् ॥६ ॥
सरोरुहं शैवलवल्लरीभिः, सुधांशुबिम्बं च घनच्छटाभिः ।
भवेत्परीतं, तुलयेत्तदैतन्मुखं वृतं कुन्तलधोरणीभिः ॥७ ॥
मयूरकण्ठद्युतिरेष केशो[5] न लोचनासेचनकस्वरूपः ।
तपावसानोल्लसिताम्बुवाह-स्थितिं दधत्तापमपाचकार ॥८ ॥
कटौ लसन्ती शकटान्तकस्य, स्फुटा विराभा रुचिरा च काञ्ची ।
कपोपले व्यक्तविभाविशेषा, सुवर्णलेखा सुतरामजैषीत् ॥९ ॥
अकृत्रिमाभोष्ठकराङ्घ्रि तस्य, श्रयद् द्रुतालक्तकरक्तकान्तिम् ।
प्रसह्य बन्धूक-नवच्छदाम्भोरुहामहार्षीदुपमानभावम् ॥१० ॥
विपद्भिदे कारुणिकाग्रणीशो[6] ध्रुवं मनुष्येतरजन्तुवृत्तीः ।
परीक्षमाणः स्वयमेव तत्तत्स्थितिं कियत्कालमशीलयत्सः ॥११ ॥

१. सर्गेऽस्मिन्नुपान्त्यं यावदुपेन्द्रवज्राछन्दः ।
२. स्वभावोक्तिः ।
३. स्मृतिः ।
४. इतोऽतिशयोक्तौ ।
५. इतो निदर्शना ।
६. उत्प्रेक्षा ।

निवेशिताप्रत्नमहार्घरत्ने, महीतले बाहुबलेन सर्पन् ।
सरीसृपाणामुपगम्य साम्यं, चकार ससारपदं यथाऽर्थम् ॥१२ ॥
उदाहिताक्ष कतिधाऽनुयुक्तः[1] प्रसूमुख पीतपया स पश्यन् ।
स्मितोज्ज्वलश्री स्फुरिताधरो द्राक्, कल चलद्ग्रीवमलङ्चकार ॥१३ ॥
अनन्तरं घोषपते सुतस्ता, दशामतीत्य क्रमशक्तसक्थ ।
पुरन्दराशामुखवन्निशान्ते, जवादवस्थान्तरमाससाद ॥१४ ॥
महीलुठज्जानुकराब्जयुग्मश्चतुष्पदेहामभिपद्यमान ।
समन्तत स्मेरमुखः सुखेन भ्रमि स भूयो भवने वितेने ॥१५ ॥
तदा जनन्या निहितानि दूरे, समेत्य वस्तून्यतितूर्णमेष ।
सलीलमच्छस्मितमाददानश्चिराय ता कौतुकिनीमकार्षीत् ॥१६ ॥
चतुष्पदीभूतमध कृतास्य रजस्वल वीक्ष्य हरिं सुराणाम् ॥
धरासमुद्धारपरः पुराणो, [2]महावराहः स्मृतिमारुरोह ॥१७ ॥
परोरजा यो निगमे प्रसिद्ध पर रजोधूसरविग्रहन्तम् ।
लुठन्तमादाय हृदोपगूहन् [3]न तृप्तिमाभीरपुरन्दरोऽगात् ॥१८ ॥
स्तनन्धयत्वेऽप्यमरप्रतीप-प्रसह्यनिर्यापणशौर्यलब्धाम् ।
प्रशस्तमुक्तावलिमञ्जुमूर्ति, [4]वहि स्फुरन्ती स दधार कीर्तिम् ॥१९ ॥
अनाविलः कृष्णगलावलम्बी विशुद्धिभृद्द्राघिमलब्धवर्ण ।
नवाम्बुदोत्सङ्गलसद्बलाका-श्रियं हठेनैव [5]जहार हारः ॥२० ॥
घनाभश्चोपाधिपवालकण्ठे, प्रलम्बिनी मौक्तिकवल्गुवल्ली ।
कलिन्दकन्यासलिले स्फुटन्ती, सरोजराजीव[6] सिता बभासे ॥२१ ॥
बलेन जान्वो करयोश्च कामं भ्रमन् कदाचिज्जननीपरोक्षम् ।
धियामधीशो नवनीतबुद्ध्या, स शुक्तिचूर्ण [7]कवलीचकार ॥२२ ॥
क्वचित्स्फुटच्चम्पककोरकाभा, सुरार्चनादीपशिखा कराभ्याम् ।
महोऽवलोकोत्सुकिनो ग्रहीतुमहो महीयांसमुवाह यत्नम् ॥२३ ॥

१. स्वपा ।
२. स्मृति ।
३. भावध्वनि ।
४. अप. ।
५. निद.पम. ।
६. उप. ।
७. भ्रान्ति ।

विलोक्य वक्रां गतिमात्तचित्रशिराय मन्मानसराजहंसः ।
विलेशयं क्वापि करेण गृह्णन्[1] किमाप्यसत् कालियनिग्रहं सः ॥२४ ॥
प्रदर्शितः क्वापि विधु जनन्या, मृषागिराऽऽश्वासदुराशया स ।
तमेव धर्तुं ग्रहिलोऽथ भूय प्रयस्य मोघ नितरामरोदीत् ॥२५ ॥
शनैर्दृढाङ्गः सबलः स खेलन्-वयस्यबालावलिमध्यवर्ती ।
मुहुःक्वणन्नूपुरकिङ्किणीकं, व्रजाङ्गणे रिङ्गणमाततान ॥२६ ॥
रवेरिवारोपयतः पदानां, शतं समेत्योदयशैलशृङ्गे ।
न लक्ष्यता कस्यचिदस्य यातस्तनूसमृद्धौ समयातिपात ॥२७ ॥
यदस्य लग्नापदयो जडाऽपि, व्यधत्त शब्दं मृदु नूपुराली ।
तदेतयोः स्पर्शलवेन सद्यः, शिलाऽबलीकारकयो महत्त्वम् ॥२८ ॥
नितान्तलोल तनुज भ्रमन्त, ततस्ततो मङ्क्षु निवारयन्ती ।
अनुक्षण कातरधीर्यशोदा, शिव गिरीशास्य शिव ययाचे ॥२९ ॥
मुखं क्व, नामे क्व, दृशौ क्व,कर्णौ, क्व, तात दन्ताश्च तवेति पृष्टः ।
प्रदर्श्य तथ्यं वितथ तथा तद् व्रजौकसा मोदमवर्धयत्सः ॥३० ॥
ततोऽनुनीतो नवनीतलुब्धैः सम वयस्यैः सुबलप्रधानैः ।
विवेश खेलाचटुलः कदाचित्, प्रभावतीराशनि पद्मनाभः ॥३१ ॥
गृहे महीयस्यधिभाण्डपण्डं, समन्ततोऽन्वेष्टुमपांशु गव्यम् ।
प्रयत्नमूकीकृतसर्वभूपः, सखीन्दृशैवादिशदाशु कृष्णः ॥३२ ॥
अथ स्वपात्राणि निरीक्ष्य तूर्णं दृशं भृशं निम्नुरिमे यदोर्ध्वम् ।
तदाऽधिशिक्यं प्रतिपद्य गव्यमसूचयंस्तद्ग्रहणाक्षमास्तम् ॥३३ ॥
समूढपीठस्थित-पार्श्वभित्ति-विषक्तबाहुस्थिरवल्लवांसम् ।
स्वयं शशीवोदयशैलशृङ्गं,[2] समारुरोह व्रजराजसूनुः ॥३४ ॥
निदाघतापार्तमिवासिताङ्ग समीरपाणोर्ध्वफण भुजङ्गम् ।
चलाचलाक्षो नवनीतपात्रे, न्यवेशयत्पाणिमुदङ्गुलि स ॥३५ ॥
गृहेऽतिभीमे तिमिरातिरेकादयत्नदीपीकृतसर्वस्तुभोऽसौ ।
वयस्यकीशप्रकराय दातु-मवूपुरद्व्यमपव्ययायः ॥३६ ॥
उपागता द्वारि कुतोऽपि तावद्, ददर्श दूरादुपनन्दपत्नी ।
अशेषमारादपहृत्य गव्यं, स्वयं सखिभ्यो वितरन्तमेनम् ॥३७ ॥

१. उत्ते॰ ।
२. इत उपमायुगम्

अन्वेक्ष्य ता मङ्क्षु भयेन दूरं, सहायवालेषु पलायितेषु ।
स केवल साहसिकः पुरस्ताद्-विनीतवत्तद्विजिगीषयाऽस्थात् ॥३८ ॥
विलोक्य लुण्टाकमिम पुरस्थं, प्रभावतीप्रेमपरिप्लुतान्त ।
प्रकाशयन्ती कृतक प्रकोपं, जवात् सकम्प करयोरगृह्णात् ॥३९ ॥
तवाङ्ग ! माता कलहायमाना, न जातु या विश्वसितीतरोक्तौ ।
इद तदादाय शठं हठात्त्वाममूमुपालब्धुमह व्रजामि ॥४० ॥
इतिब्रुवाणा मधुसूदनं सा, पिधाय बद्धाञ्जलिमञ्चलेन ।
व्रजेश्वरी जेतुमना विवादे, द्रुतं तदीयायतन निनाय ॥४१ ॥
हरिस्तु गोप्या वत नीयमानस्तदात्मजाकारमकल्पयत्स्वम् ।
ह्रिया गुरूणामवगुण्ठितास्या, न सा तदाऽऽदोऽवजगाम किञ्चित् ॥४२ ॥
प्रतीहि भो स्व तनय गृहाण, प्रविश्य शून्यं सदनं मदीयम् ।
अकारि सम्भूय समै. सुहृद्भि, र्दिवाऽपि सद्यो वत येन चौर्य्यम् ॥४३ ॥
उपद्रुतास्त्वत्तनुजेन शश्वत्, किमेवमेव व्रजवासिनोऽमी ।
व्रज पुरस्कृत्य गवा व्रजन्तु, व्रजेश्वरि ! क्षिप्रमितीच्छसि त्वम् ॥४४ ॥
तवात्मजस्येत्थमिहापराधान्, जना कथंवा कति वा सहन्ताम् ।
निवारयाद्यापि तदेनमार्य्ये[1] ! न चातिवेलं हि शिवाय किञ्चित् ॥४५ ॥
उपप्लवैरस्य तवाङ्गजस्य, व्रजे चिराद्बुद्विजते न का वा ?
नहीदृशो दुर्विनय परस्या, क्वचिन्नसूदुर्ललितोऽस्ति बाल. ॥४६ ॥
इतिव्यतीते सुरभौ पिकीव[2] क्रुधाऽतिरूक्षाक्षरमुद्गिरन्तीं ।
निज सुत सा वत नन्दपत्नी[3] तदात्मजस्यैव धियोपनिन्ये ॥४७ ॥
उवाच ता मन्दमिदं यशोदा, स्थितिं कुत प्रलतमां जहासि ।
यवीयसि ! प्रेयसि पश्य यातस्तव भ्रमोऽय कतमोऽद्य जात ॥४८ ॥
निजेऽपराधेऽपि विशिष्य मह्य, चिरादुपालम्भभरं ददत्या ।
त्वयैव चण्डि ! व्रजमण्डलेऽस्मिन्, नवीननीति प्रकटीकृताऽहो ॥४९ ॥
क्रुधाऽन्धया गाढ़गृहीतपाणि, तया स्वकीयं सुतमेव नीतम् ।
समीक्ष्य सर्वा- सहसा सहासा, प्रभावतीमप्रतिभामनैषु ॥५० ॥

१ अ० न्या० ।
२. उप० ।
३. भ्रान्ति० ।

स्वमेव सूनुं घृतमीक्षमाणा, गतोऽच्युतः क्वेति च चिन्तयन्ती ।
अवाङ्मुखी पर्षदि वल्लवीनामभूदसौ विस्मयवासभूमिः ॥५१ ॥
स्वकर्मणा तेन कृतानुतापा, यशोदयाऽनल्पदयार्द्रया सा ।
विबोधिता, तामनुनीय भूयो, यथागत वल्लववल्लभाऽगात् ॥५२ ॥
ग्रहीष्यसीत्थं यदि वा पुनर्मा, तदा प्रपत्स्ये तव कान्तरूपम् ।
इतीरिता नन्दसुतेन गोपी, पथि स्मितं प्रीतिमती वितेने ॥५३ ॥
अथान्यदाऽऽभीरकुमारजुष्टः कलिन्दजाकूलमुपेत्य खेलन् ।
गवेपयश्चित्ररसं विचित्र-प्रसादमादन्मृदमाददेव ॥५४ ॥
अवेत्य तत्कौतुकिनः सहायाः, स्वभावलोलाः पशुपालबालाः ।
विहाय लीलां हरिणप्लुतेन, व्रजाधिराज्ञीं समया समीयुः ॥५५ ॥
वितर्क्य तेषां पिशुनप्रवृत्तिं विचिन्तयन्नुत्तरवाक्यमन्तः ।
गतप्रभो भानुरिवास्तशैलं,[1] मुरान्तकोऽप्यायतनं प्रतस्थे ॥५६ ॥
निभाल्य सा केशवमन्तरेण, व्रजार्भकानापततोऽविवेगात् ।
अमङ्गलं किञ्चन तर्कयन्ती, श्रितत्वरा कातरधीरपृच्छत् ॥५७ ॥
विमुच्य कुत्राच्युतमेककं मे,[2] शिशुं, समागच्छथ मङ्क्षु वत्साः ।
विलुण्ठ्य वः पार्श्वचरं किमेनं, शठो विधिः प्राप कृतार्थभावम् ॥५८ ॥
तटे लुठन् वा तपनात्मजायास्तरङ्गकल्लोलभरेण पूरे ।
अलब्धविस्रब्धकरावलम्बो, न्यधायि नूनं मम हन्त वत्सः ॥५९ ॥
शिरीषकोषादपि कोमलाङ्गः, सदा सदुत्सङ्गकृतप्रचारः ।
इयद् द्रुतं धावितुमक्षमोऽसौ, भृशं बभूवाध्वनि हा निरस्तः ॥६० ॥
कराङ्गुलिं मे प्रसभं गृहीत्वा, प्रयाति कुत्रापि गृहाद्बहिर्यः ।
वनान्तसङ्कीर्णतरं दविष्ठं, कथं स पन्थानमवैतु बालः ॥६१ ॥
इतस्ततः स्वायतनेऽपि धावंस्तथा भृशं श्रान्तमश्नुते यः ।
कथं नु निम्नोन्नतभूप्रदेशे, शिशुः प्रकृत्या चपलश्चलेत्सः ॥६२ ॥
मुकुन्दमेकाकिनमेव बालं, विसृज्य दूरे मम सन्निधाने ।
प्रजानतामागमनं समेषां, न साम्प्रतं सम्प्रति साम्प्रतं वः ॥६३ ॥
इयद्यशोदावचनं प्रतीपं निशम्य विच्छायमुखाऽर्भकाली ।
स्वकीयभागः परिहर्तुकामा, बलं पुरस्कृत्य जगाद मन्दम् ॥६४ ॥

१. उप० ।
२. इतो भावध्वनय: काव्यलिङ्ग च ।

प्रसीद मातस्त्वमनिष्टशङ्का जहीहि जानीहि तमन्तिकस्थम् ।
कृतावधाना शृणु तावकानामिहातितूर्णागमनस्य हेतुम् ॥६५ ॥
कलिन्दकन्यापुलिनेऽधुनैव, त्वदात्मजन्मा वत न समक्षम् ।
निवारकाणामवधीर्य वाचं, मुहुर्मृदं प्राशितवान्स्वतन्त्र· ॥६६ ॥
इद निगद्य प्रतिपद्य मौनं, व्रजार्भका दण्डदिदृक्षयाऽऽसन् ।
विलोकनं प्रस्तुतनिग्रहस्य,[१] प्रधानकृत्यं खलु सूचकानाम् ॥६७ ॥
हितैषिणी दर्शितमञ्जुरोषा, भिया निलीन क्वचनास्पदे सा ।
स्वरेण मेघध्वनिजित्वरेण,[२] तदात्मज तर्जितुमाजुहाव ॥६८ ॥
उपेहि कृष्ण ! त्वरयेति मातु, निशम्य वाच कठिनस्वरा स ।
स्खलद्गति वेपथुमन्थराङ्गो, नताननस्तत्सविधं प्रपेदे ॥६९ ॥
भियोऽपि भीतिर्ननु यस्य कोपात्[३] कथाऽपरेषामथ जीविनां का ।
अहो तदानी पशुपालपत्न्याः, स चाप्यदभ्रं बिभयाञ्चकार ॥७० ॥
जगत्त्रयाशास्यतमप्रसाद:,[४] प्रभु.क्व सृष्टिस्थितिसहृतीनाम् ।
इयं क्व चाभीरकुटुम्बिनीभीरचिन्त्यभावा हि माहानुभावा· ॥७१ ॥
विलोचने पाणिसरोरुहाभ्या परामृशन्त मुहुरुच्छ्वसन्तम् ।
रुदन्तमाकृष्य करे सवित्री रुषेव पप्रच्छ मुकुन्दमुच्चे ॥७२ ॥
उपेक्ष्य गव्यप्रमुख प्रभूत[५] सुधारसस्वादु गृहेषु गव्यम् ।
रहो मृदं भक्षयतस्तवासावहो जघन्या प्रकृति कुतस्त्या ॥७३ ॥
सखण्डकूर्चादपि किन्वखण्डस्त्वया रस कश्चिदिहोपलब्ध ।
यदीदृश वारयतामकार्य्यादकारि कर्णे न वच सखीनाम् ॥७४ ॥
स्तनन्धयस्यापि युवानुरूपं,[६] तव स्वतन्त्राचरणं यदेतत् ।
अदान्तदन्तावलसन्निभं तन्निरङ्कुशत्व कलभस्य नूनम् ॥७५ ॥

१ अनुप्रासार्थान्तरन्यासौ ।
२. का० लि० ,व्यति० ।
३ अति० ,अर्थापत्तिश्च ।
४. विषमार्थान्तरन्यासौ ।
५. इतो भावध्वनय· ।
६. निदर्शनोपमे ।

अनार्य्यकार्य्यस्य फलं तथेदं[1] द्रुतं ददे दुर्ललिताय तुभ्यम् ।
यथा पुनर्नो नयमुच्चरेथाः[2] शमाय दण्डो हि समुद्धतानाम् ॥७६ ॥
प्रतिश्रुतिं ता निजनिग्रहार्थं निशम्य भीतप्रतिमः स तस्याः ।
रुदन्नयादीन्मधुसूदनो द्राङ् मया न मातः ! क्वचनाशिता मृत् ॥७७ ॥
मयाऽसहायेन सरित्समीपे, पराजिताः केलिकलासु सर्वे ।
अशक्नुवन्तः प्रतिजेतुमेते, मृषापवादं मम घोषयन्ति ॥७८ ॥
सवित्रि ! को वा नवनीततृप्तो, जनो जिघत्सेन्मृदमप्रमत्तः ।
उदेति नातोऽपि यदि प्रतीतिस्तदा स्वयं पश्य मदीयमास्यम् ॥७९ ॥
इतिस्फुटं तथ्यमिवैव मिथ्या, प्रसज्ञनन्या निजगाद सम्यक् ।
जनोऽपि जानाति मृषा प्रपञ्चप्रथा[3] पुनः किं जगतामधीशः ॥८० ॥
वचोऽस्त्यलीकं किमु कैटभारेरुतागरेयामिति सशयात्तता ।
दधार चेतश्चपलं चिराय,[4]-द्विपावगाहादिव वारि सिन्धुः ॥८१ ॥
उपस्थितद्वापर[5]- पीडनार्हं, क्षणेन निर्णीय परीक्षणं प्राक् ।
सरोरुहं फुल्लमिवास्यमस्य, प्रचक्रमे व्यात्तमवेक्षितुं सा ॥८२ ॥
हरेः स्फुरद्दन्तगणाग्रलग्नान्, पयः कणान् पूर्वमसावदर्शत् ।
तुषारबिन्दूनिव कुन्दकिञ्जिद्विकारिपुष्पप्रकरावतसान् ॥८३ ॥
जगन्मयत्वं कुतुकेन कामं, स्वकीयमुन्मीलयतो मुरारेः ।
विलोकितं व्यात्तमुखे जनन्या, शनैरपर्य्यासितवृत्ति विश्वम् ॥८४ ॥
चतुर्दशासौ भुवनानि लोकैरदृष्टपूर्वाणि विलोकयन्ती ।
शिशोरिहास्ये सहसाऽधिचित्रं[6] स्थितेवनिस्पन्दतमाऽऽप चित्रम् ॥८५ ॥
व्रजाय राजीवरजः सुगन्धि-तरस्विकल्लोलभुजैरजस्रम् ।
मुहुस्स्वयङ्ग्राहमुद ददानां,[7] नदी कलिन्दाचलनन्दिनी सा ॥८६ ॥




१. ध्वनिः ।
२. नीतिमुल्लङ्घ्य गच्छे । अ० न्या० ।
३. अर्था०
४. उप० ।
५. मशयः । इत उपमाद्वयम् ।
६. उत्प्रेक्षा ।
७. समासोक्तिः ।

दिवातुलायां व्रजगौरवाय,[१] प्रजासृजा भारमिवाहितं प्राक् ।
विशालशृङ्गालिदरीपरीत, गिरिञ्च गोवर्धनमैक्षतारात् ॥८७ ॥
मुकुन्दकीर्तिस्तुतिवन्दिभाव-प्रनन्दिनन्दीश्वरपवित्रवृन्ताम् ।
सुखासिकामन्दिरमिन्दिरायास्तदेव वृन्दावनमन्वविन्दत् ॥८८ ॥
क्रमेण गोष्ठ, भवन, पति, स्व, सुतं च त तत्र निभालयन्त्या ।
सलीलमेव पशुपेन्द्रपत्न्या, बभूवुरस्तत्र वयुर्वितर्का: ॥८९ ॥
किमु भ्रमोऽय न कुतोऽस्ति बाध-[२] ग्रह. परस्तात् स्थिरचेतसो मे ।
न युज्यते स्वप्नदशा कथञ्चित्, प्रबोधमुज्जृम्भितमाश्रयन्त्या ॥९० ॥
भवेन्मृषात्व कथमेषु साक्षात्-कृतेषु वा वस्तुषु सुव्यवस्थम् ।
मलीमसेऽस्मिन् व्यवथौ च तेषा, घटेत नापि प्रतिबिम्बभाव ॥९१ ॥
द्विताग्रहीतेऽपि पदार्थसार्थे, तदात्मता सम्भविनी कुतो वा ।
कथञ्चिदैक्ये पुनरस्य कस्मात्तथाऽवभासो युगपत्पृथक् स्यात् ॥९२ ॥
न चित्रता व्यापृतिमत्सु युक्ता, नट विना नाट्यविधि कथ वा ।
असौ तदस्यैव शिशोर्महिम्नो, विकस्वर. कोऽपि नव प्रभाव ॥९३ ॥
निरुद्धचित्रन्विदर्शीयमाया, तनोति मे मोहलताप्रतानम् ।
विलीनचन्द्राऽनवलक्षपक्ष-प्रदोषवेलेव तमोवितानम् ॥९४ ॥
प्रसार्य्य सान्द्रां स्वयमेव माया, यदृच्छयाऽय क्षपयेदवश्यम् ।
पराजिताम्भोरुहनालसूत्रान्, क्षिणोति लूतेव वितत्य तन्तून् ॥९५ ॥
अतीतबुद्धिप्रसरप्रभावो, विशुद्धचैतन्यमयोऽद्वितीय ।
स्वभावमुग्धामबलामथो मा, दयादृशा पश्यतु विश्वनाथ ॥९६ ॥
अपूर्वपूर्वार्जितपुण्यपुञ्जं, ममातिवेलं चरितार्थयन्त्य ।
अवातरद्गर्गगृहीतनाम्ने, नम परस्मै पुरुषाय तस्मै ॥९७ ॥
अतिसरलनिसर्गा गर्गवाच स्मरन्ती
भुवनवलयमस्य प्रेक्ष्य साक्षान्मुखान्त. ।
विरततनुजबुद्धि शुद्धकैवल्यभावं
[३]कुलयुगलयशोदाऽवोधितत्व यशोदा ॥९८ ॥

१. इत उत्प्रेक्षाद्यनुप्रासा ।
२. इत समन्देरा ।
३. पितृकुल श्वशुरकुल च ।

विशदमुदितमात्रं तं विवेकं जनन्याः
प्रसभमपनुनुत्सुः सत्सरोजप्रियोऽसौ ।
सुरभिरिव तुषारं[1] क्षिप्नुरर्कोत्सवृद्धि
तनयपतिमतीतान्यप्रतीतिं व्यतानीत् ॥९९ ॥
अथ झटिति सशङ्कं कृष्णमङ्के निधाय,
व्रजपुरपुरहूतप्रेयसी वीतसंवित् ।
स्मित-विलसितमुग्धं दुग्धमापाययन्ती,
पुनरपि बत साऽभूद् भूरि वात्सल्यभूमिः ॥१०० ॥
अथ 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रथी-'विद्यानाथ'-प्रभव-'बदरीनाथ्'-रविवत् ।
यतिं षष्ठः सर्गः[2] 'सुरभि'-विवृतिज्योत्स्नि ययौ
महाकाव्ये श्राव्ये कविसदसि राधापरिणये ॥१०१ ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के विश्वप्रकाशोनाम षष्ठः सर्गः सम्पूर्णः ।*

१ उपमा ।
२ सुरभिनाम्नी रसमञ्जरीव्याख्या ।

## अथ 'यमलार्जुनमोचनो' नाम
### सप्तमः सर्गः ॥

गोकुलेशवनिताऽथ[1] जातुचिद्, गेहकर्मसु नियुज्य किङ्करी ।
मूर्त्तिरध्यवसितेश्चिरस्थित, निर्ममन्थ कुतुकात् स्वय पय ॥१ ॥
क्षौमनीलघनवाससी वहि-र्भूय तद् भुजयुग घनोपमात् ।
तप्तहेमरुचिर चिर चलद्, वैद्युतीद्युतिमतीत्य दिद्युते ॥२ ॥
वन्धुजीवरुचिबन्धुकञ्चुके, मन्थनाच्चलदद कुचद्वयम् ।
पद्मरागमणिसम्पुटे स्फुरच्चक्रवाकमिथुन व्यधादथ ॥३ ॥
वेल्लनात्सुमसमूहमुत्सृजन्नेतदीयकचसञ्चयोऽश्रयत् ।
वारिविन्दुनिकर वृहत्तर मुञ्चतो नवघनस्य मञ्जुताम् ॥४ ॥
तत्र ताण्डवितकुण्डलद्वयी-रत्नभाच्छुरितगण्डमण्डलम् ।
पुण्डरीकमिव चण्डदीधिति-द्योतपिण्डपरिमण्डितं बभौ ॥५ ॥
सन्निखात[2]कुटरानुषङ्गिणी, गर्गरी[3]-निहितमन्थचालिकाम् ।
कर्कशा दलिततालवृन्तजां, रज्जुमुज्ज्वलयशा यशोमती ॥६ ॥
आचकर्ष जलजातकोमल-स्वीयपाणियुगलेन सा चिरम् ।
अञ्जसाऽभ्यसनमेव[4] कारिषु, प्रायशो जनयति प्रगल्भताम् ॥७ ॥

-युग्मकम् ।

भूषणप्रकरशिञ्जितैर्धित:, चञ्चलीकृतपय स्वनोर्जित ।
अत्यशेत नववारिदध्वनि, धीरघर्घररव स गार्गर· ॥८ ॥
कङ्कणक्वणनतालदायिना, मथ्नती करयुगेन[5] गोरसम् ।
गोपिका पिकविकस्वरस्वरा, वालकृष्णचरितं चिरं जगौ ॥९ ॥
रक्तकृष्णजननी-कराङ्गुली-कान्तिशालि-पृथुमन्थतल्लज ।
लग्नविद्रुमलत सरस्वतो, मन्थने परिजहास मन्दरम् ॥१० ॥
क्रीडनानि मुरमर्दनस्तदा, प्रस्तुतानि सखिभिर्विसृज्य सः ।
मातरित्यनुपद वदन् क्षुधा, तां सुधाग्र्यपयसे समाययौ ॥११ ॥

१ सर्गेऽस्मिन्नुपान्त्यं यावद्रथोद्धताच्छन्द ।
२. मन्थरज्जुबन्धनयष्टिः ।
३. मन्थनभाजनम् ।
४. क्रियासु ।
५. गव्यम् ।

उल्ललास सहसा तदीक्षणाद् घोषराजवरवर्णिनीमनः ।
पूर्णबिम्बरजनीसुहृत्समुज्जृम्भणादिव[1] नदीशजीवनम् ॥१२ ॥
कोमलस्मितविलासलक्ष्यया, वीक्षयैव जननीमनः क्षिपन् ।
आददे चटुलचेष्टितश्चलत्-क्षुब्ध[2]-मन्थिघशयनः प्रसह्य सः ॥१३ ॥
सा बुभुक्षितमवेत्य बालकं, साध्वसाद् द्रुतमपास्य मन्थनम् ।
सादरं भुजयुगेन वल्लवी, सान्त्वयन्त्यनु तमङ्कमानयत् ॥१४ ॥
गोरसेषु विविधेषु सत्स्वपि, स्तन्यपानरसिकोऽवलम्ब्य ताम् ।
दर्शयन् क्षुधमनामयः पयः, प्रेमपाति पुरुषोत्तमः पपौ ॥१५ ॥
पाययन्त्यमृतसोदरं पयः, प्रेक्ष्य तस्य मधुरस्मितं मुखम् ।
घोषराजमहिषी पुरातनं मन्यतेस्म फलितं निजं तपः ॥१६ ॥
नाद्भुतं यदवलोकयन्त्यमुं, किञ्चिदन्यदपि नैव साऽन्वभूत् ।
स्निह्यति स्वतनुजे भृशं प्रसूः, प्राकृतेऽपि किमुतेश्वरे पुनः ॥१ ॥
तावदुच्छ्रितमभूदधिश्रितं, क्षीरमन्तरितदर्वि दूरतः ।
अञ्जसाऽऽप्तबहुवैभवाप्तगी-[3]स्त्यागिरागिजनमानसं यथा ॥१८ ॥
वल्लवी तदवलोकनोत्सुका, द्राङ्निरस्य सतृषं शिशुं ययौ ।
जातिसिद्धसमया यतोमति, नो जहाति जनमुत्रतावपि ॥१९ ॥
आन्तरद्विपददृष्टमप्यमुं, कार्यमानवत्रपुः परिग्रहात् ।
आससाद तदनादरोद्भवा, रुट् सुकेतुतनयेव राघवम् ॥२० ॥
ईक्षणो मुररिपोरिह क्षणे, शोणिमानमलमूहतुस्ततः ।
भानुभानुचयचारुचुम्बनात्, प्रौढकोकनदकुड्मले यथा ॥२१ ॥
गव्यमत्र सदपि प्रियं ततस्तद्व्ययादतनु कोपयाम्यमूम् ।
साम्यसूचिदिदमप्यनस्यता, माधवेन विदधे विडम्बना ॥२२ ॥
कौशलेन तदुलूखलोपरि, न्यस्य पीठपटलं स्थितस्ततः ।
केकिकीशपशुपालबालकान्, हर्षयन् स तु ववर्ष गोरसम् ॥२३ ॥
न्युब्जहैमकलशालिनिस्सरत्, क्षीरनिर्झरभरोऽहरत्परम् ।
भूरिमेरुशिखरस्खलत्तर-स्रोतसो द्युसरितोऽद्वितीयताम् ॥२४ ॥

१. समुद्रजलम् ।
२. मन्थनदण्डम् ।
३. अञ्जसाऽनायासेनाप्तं बहुवैभवं येन, स चासावाप्तानां हितानां गिरस्त्यागी धनमदादुल्लङ्घकी रागी जन इत्यन्वयः ।

ये नितान्तनवनीतलोलुपा, प्रेष्ठगोपशिशवो महासव ।
असगोऽथ खलु तन्मनोरथ, लीलयैव भगवानपूरयत् ॥२५ ॥
मर्कटै प्रकृतिवल्गुभि सम, प्राज्यभोज्यमुपलभ्य पेशलम् ।
सम्मदेन ननृतुः कलापिन कं न नन्दयति वाञ्छितागमः ॥२६ ॥
सन्तुतोष न रुषाऽऽकुलोऽखिल, गव्यमव्यवहित वितीर्य सः ।
स्वैरमत्र तदमत्रसहितं, मार्त्तिकी यदचिरादचूर्णयत् ॥२७ ॥
सिद्धमिद्धदहने ससम्भ्रमा, मङ्क्षु दुग्धमवतार्य साऽऽगता ।
वीक्ष्य गोरसदशां पलायितं, मार्गयन्त्यकलयत्तमन्यत ॥२८ ॥
व्यक्ततत्कृतककोपविभ्रमा, गोपपुङ्गववधू. कृतश्रमा ।
चक्रपाणिमरिचक्रशातिनं, वक्तुमित्थमुपचक्रमे तत ॥२९ ॥
दुर्विनीत ! सखिभि. सम शठैरेवमेव बहुगव्यलुण्ठनात् ।
पीडयन्निखिलगोकुलौकसो, निश्चित[1] त्वमभवो जनार्दन. ॥३० ॥
भाण्डमण्डलमुदस्य खण्डयन्, भूरिगव्यमवलुण्ठ्य दण्डभृत् ।
चण्ड ! कल्पयसि कौशतुण्डसात्, क्रीडन न[2] तदसावुपद्रवः ॥३१ ॥
इत्थमुग्रतरतर्जनोक्तिभि, दूयमानमवधूय सा सुतम् ।
गव्यलोपभृशकोपधूपिता, निग्रहीतुमनु यष्टिमग्रहीत् ॥३२ ॥
आत्तयष्टिमवलोक्य मातर, द्राक् पलायत तथा यथाद्रुतम् ।
धाविताऽपि पशुपालवल्लभा, धर्तुमात्मजनुष न चक्षमे ॥३३ ॥
स्वेदबिन्दुभिरवेत्य तामथ, श्रान्तिभाजमनुकम्पया पुर. ।
तस्थिवानभिनयन् भियं पुन, लोचने परमसौ न्यमीलयत् ॥३४ ॥
केशवस्य नयनाम्बुजद्वय, तारकालि, [3]मृदुपक्ष्मकेसरम् ।
सञ्चुकोच सहसाऽञ्चदीधिती, नन्वतन्द्रमुखचन्द्रसन्निधौ ॥३५ ॥
नन्दसूनुवदनामृतह्रदे, कुन्तलप्रकरशैवलावध ।
नेत्रमीनमिथुन ध्रुव चिर-क्रीडनश्लथतराङ्गमस्वपत् ॥३६ ॥
मुद्रितासितसरोजसुन्दरं, माधवाक्षियुगलं निमीलितम् ।
भृङ्गिरेफततिचुम्बित चिरात्र प्रसूरजनि भीतमस्फुटत् ॥३७ ॥

१ दीधितोक्तौ निरुक्त्यलङ्कार ।
२ प्रतिषेध इतिशेष ।
३ नागैरन्तर्निर्गमो यत्र ।

मीलिताक्षमथ वीक्ष्य तं भिया, दण्डमुग्रमपहाय वल्लवी ।
वत्सलाऽपि तु विनेतुमच्युतं, तत्र शास्तिमपरा परामृशत् ॥३८ ॥
धावनातिशिथिलाङ्गवल्लरी, वल्लवी हरिगुणानजानती ।
स्नेहपाशमितपूर्वमप्यमुं, दीनबन्धुमथ बन्धुमैहत ॥३९ ॥
बालिकाभिरुदिताश्रु वारिता, तानवेन तरुणीभिरर्थिता ।
तर्जिता च जरतीभिरप्यसौ, नैव दुर्ग्रहगिरेरवातरत् ॥४० ॥
क्षीरकण्ठसुतबन्धनोद्यता, कुर्वती हितनिवारणं वृथा ।
गोपिका विपुलकोपिका ददौ, स्नीस्वभावकठिनत्वसंस्तवम् ॥४१ ॥
रश्मि रश्ममनसा तयाऽऽयतो, योजितो यदपि बन्धुमात्मजम् ।
किन्तु तादृशनृशंसकर्मणः, सङ्कुचन्निव तनूबभूव सः ॥४२ ॥
सूचयन्निव विरागबोधयोरत्ययं व्रजमहीपयोषितः ।
द्राघितोऽपि स गुणो हरेः सितावङ्गुलीयुगलमानमौननत् ॥४३ ॥
योजयन्त्यपि समस्तमोकसो, दीर्घदामपटलं पुनः पुनः ।
तावती त्रुटिमपोहितुं चिरादक्षमाऽतिविषसाद वल्लवी ॥४४ ॥
मातरं मुरभिदोहिताहते, दूयमानमनसं विभावयन् ।
द्राक् तनूकृततनूरुचाऽसितस्त्वद्गुणेन यशसाऽप्यभूत्सितः ॥४५ ॥
यद्विवृत्तधरणीपयोमहो-मातरिश्वगगनान्यपि क्वचित् ।
नैव बन्धुमुचितानि,[१] किंपुनः स स्वयं प्रकृतिमुक्तिभृद्विराट् ॥४६ ॥
यस्य नास्ति परमार्थतो वपुः, का कथा परिमितेस्तथाविधे ।
माधवे किमिव बन्धनं, प्रसूरज्ञताविलसितं तदप्यधात् ॥४७ ॥
आयसैरपि न शृङ्खलोत्करैर्यस्य सम्भवति जातु बन्धनम् ।
बन्धुमर्हति कथं तमीश्वरं, दाम नाम कुशकाशनिर्मितम् ॥४८ ॥
किन्तु चित्रमयचेष्टितैर्भृशं, भक्ततुष्टिमभितोऽस्य तन्वतः ।
भक्तिपाशमहिमा महानहो, यद्बबन्ध दृगगोचरः स तम् ॥४९ ॥
दाम तामरसलोचनोऽम्बया, शम्बकर्कशहृदा निवेष्टितम् ।
बिभ्रदभ्ररुचिरग्रमोऽभवन्निर्गुणोऽपि सगुणो जनार्दनः ॥५० ॥
निग्रहाय नियता यशोदया, रज्जुरुज्ज्वलरुचिः पुरः कटेः ।
तस्य तप्ततपनीयमेखला-मञ्जिमानमुरुमञ्जसाऽहरत् ॥५१ ॥

१. योग्यानि ।

वन्धशुल्व[1]-मपि माधवोदरे, ततुरीयवलिभासमासदत् ।
अतिकर्त्रेपि महीयसाश्रिये, दुर्जर विपमिव स्मरद्विप ॥५२ ॥
पद्मगर्भमृदुलाङ्गमर्भक, सा नियम्य दृढदर्भरश्मिना ।
गव्यसङ्कुलननिर्भरोत्सुका, दुर्भरे समददा[2]-दुदूखले ॥५३ ॥
वन्धन स्वजनयातनोद्धृतौ, सत्वरस्त्वजगणत्र केशव ।
इष्टकार्यनिरत कदर्थनं, मध्यवृत्तमनुसन्दधाति कः ? ॥५४ ॥
नारदोदितमनुस्मरन्नसौ, मोचनाय धनदात्मजन्मनो ।
तामवेत्य भवनाद्विनिर्गतामाचकर्ष रभसादुलूखम् ॥५५ ॥
कैटभक्षपणकूटकोविदो, रज्जुवेष्टितकटिश्चलन् बभौ ।
क्षुब्धतामिव गतोऽब्धिमन्थने, मन्दरोऽहि परिवीतमेखल ॥५६ ॥
हेलया कलितसागराम्बरा-मण्डलस्य कृशयाऽग्रदंष्ट्रया ।
आदिदैत्यदलनस्य तस्य क, स्यादुलूखलविकर्षणे श्रम ॥५७ ॥
सानुकल्पमपि रहसाऽनु तच्चालयँल्लयवशादुदूखलम् ।
निस्ससार सदनादनातुरो नृत्यमिच्छुरिव नन्दनन्दन ॥५८ ॥
यामुनेऽथ पुलिने चिरन्तनौ, तौ विशालविटपौ महीरुहौ ।
आससाद रिपुसादसादरो, वारणप्रमरार्तिवारण ॥५९ ॥
यौ[3] पुरा सुरभिसारसम्भृते, वारि वारिजमुखीभिरुक्षितौ ।
राजराजतनुजौ नयोत्सृजौ, प्रस्खलद्वसनभूपणस्रजौ ॥६० ॥
सौरतश्रमविनोदनोदयत्-केलिकौतुकतृपौ मुहुर्मुहु ।
सेवितासवकृतान्धभावकौ, भावकौ मदनवैभवस्य गौ ॥६१ ॥
वासितानुगतितत्परौ[4] मुहु, र्भ्रान्तहस्तसलिलार्द्रपुष्करौ ।
वारणाविव चिर निरङ्कुशौ, दानिनौ सकटकौ विजह्रतु ॥६२ ॥
गच्छता निकटवर्तिवर्त्मना तद्विलज्जचरितावलोकनात् ।
नारदेन कुपितेन शापत, पादपत्वमचिरादवापितौ ॥६३ ॥
भीतवद्भ्रपरिधानसम्भ्रम-क्लान्तयौवननत प्रमोदता ।
तेन वृष्णिपदमर्शन ययोस्तापनाशनमुदीरित पुन ॥६४ ॥

१ रज्जु ।
२ वयन्ध ।
३. इत पद्यानो मरान्वय ।
४. वासिता योषित् करिणी च । पुष्कर पद्म शुण्डामुख च । अङ्कुश शासन सृणिश्च । दान त्यागो मदधारा च । कटको वलयौ गजकपोलश्च ।

तापवर्षहिमवातपीड़या, ताववेक्ष्य धृतभावविक्रियौ ।
केशवः कृपणवत्सलस्तदु-द्धारणे व्यधित न क्षणात्ययम् ॥६५ ॥
स्थूलमूलयुगरुद्धमुद्धतः कर्षताऽतिरभसादुलूखलम् ।
मध्यगेन निजपार्श्वयोर्द्वयोः, पातितौ भगवता यमौ द्रुमौ ॥६६ ॥
अप्रयासमुदपास्यशाखिना वर्जुनौ दनुजतर्जनो जवात् ।
सख्यतः स्वयमतः पराभवात्, किन्नरेश्वरसुतावमोचयत् ॥६७ ॥
मङ्क्षु दिव्यवपुषौ तु पूरुषौ, निर्गतौ पतितपादपद्वयात् ।
तौ ददर्श नलकूबर मणि-ग्रीवकञ्च यलिवन्ननश्रुत ॥६८ ॥
पादपङ्कजपरागसङ्गमाद्येन गौतमवधूकृता शिला ।
अद्भुताय जगतो भवेत्कथ, तस्य भूरुहसुरात्मजाकृतिः ॥६९ ॥
श्रीमुकुन्दवदनेन्दुदर्शन-स्फीतगीततम-सम्मदोदयात् ।
विस्मृतास्वपरदुःखसम्पदौ, तौ क्षणं जडतयाऽऽश्रितौ पुनः ॥७० ॥
चेतना द्रुतमुदुह्य गुह्यकौ, साश्रुलोचनसरोरुहौ रह. ।
वीतमान-महिमानमादरात्, सप्रणाममिदमेनमूचतुः ॥७१ ॥
गर्हितेन्द्रमणिवर्हमौलये, स्वर्णवर्णमदमर्दिवाससे ।
काकलीष्टमुरली-विलम्बिने कामपस्तु वनमालिने नमः ॥७२ ॥
त्वामवेत्य पुरुषं गुणात्पृथक्, कापिला जनितशुद्धवासनाः ।
रागसांक्ष्य-विफलक्रिया विभो ! देहिनोऽप्यमृतमापुरद्भुतम् ॥७३ ॥
क्लेशकर्ममुखदोष-दूषितैस्त्वामशेषपुरुषं रसन्निभम् ।
वीजवर्जितसमाधि-निर्वृता, योगिनस्तु कलयन्ति सन्ततम् ॥७४ ॥
अक्षपादनयकोविदैस्तथा, वीक्षितस्त्वमसि तत्त्ववेदिभिः ।
लीलयैव जगतः प्रवर्तकः, किञ्च नाथ ! दयया निवर्तकः ॥७५ ॥
स्वैरिणं नियतसद्गुणाष्टकं[१] विश्ववीजमुदितश्रुतिं विभुम् ।
भ्रान्तिहीनममृत न्यरूपयस्त्वां तमेव कणभक्षपक्षगाः ॥७६ ॥
वृत्तपूर्वमभितः श्रुतिव्रज, खण्डकल्पविगमेऽनुशिक्षयन् ।
त्वं प्रपञ्चविषयव्यपाश्रयो,[२] जैमिनीयमतपण्डितैर्मतः ॥७७ ॥
ब्रह्म सच्चिदानन्द-लक्षणं, माययाऽपिहितमद्वय विभु ।
भूतभावि वितथे भवे भवान्, व्याससदर्शनविशारदैर्जगे ॥७८ ॥

१. बुद्ध्याद्यप्टलक्षित सद्गुणादि पञ्चकम् ।
२. प्रपञ्चसर्गविलयोऽपवर्ग इति मीमांसकाः ।

व्योमकेशवपुषोऽन्तमुद्यतो, व्योम केशव ! विगाह्य नागमः ।
देवविस्मयपरम्परा नवामित्यनन्त ! किमु सूयते नवा ? ॥७९ ॥
गृध्रराज-गणिका-गजद्विजास्तारिता मुररिपो ! पुरा यया ।
नाथ ! नूनमधुनाऽपि ता भवान्, पाति दीनकरुणैकतानताम् ॥८० ॥
अन्यथा कथमथापथेतयोरावयोरवितथांतथास्थितिम् ।
अश्लथामपि वृथाकथाप्रथां, पूतनाक्लथन[1] ! सर्वथाऽकृथाः ॥८१ ॥
आवयोरनभिवादिनो प्रभो ! जाड्यकृन् समुचितो त्रिमूढयोः ।
धर्मिणाऽपि विबुधर्मिणा कृतो, निग्रहः परमभूदनुग्रहः ॥८२ ॥
प्रेप्ट्या तव चिरादविद्यया, नर्तितौ जगति रङ्गमण्डपे ।
वीक्ष्य कौतुकनिधे ! किमद्य वा, त्वं प्रमद्य समुपैपि दृक्पथम् ॥८३ ॥
ज्ञानवानपि विचित्रविभ्रमा, कस्त्वदीयकुहनाविडम्बनाम् ।
त्वत्कृपामसृणदृग्विजृम्भणात्, प्रागतित्रमितुमीश्वरः पुमान् ॥८४ ॥
ता स्वकीयमुरपक्षपातितां, नूनमद्य करुणार्णव ! स्मरन् ।
दुष्क्रियापरिणतात् प्रसह्य नौ शालजन्मनिगडादमूमुच ॥८५ ॥
आवयो र्मतिविलोलषट्पदी, त्वत्पदाम्बुजपरागरागिणी ।
देवदेव ! परमेश्वर ! प्रभो ! विश्वकिंशुकसुमान्निवर्तताम् ॥८६ ॥
क्वापि नित्यघननीरदे हरे ![2]स्थैर्यशालिचपलाऽवलम्बिते ।
लग्ननिश्चलयकावली चिरं, चातकीभवतु चेतनाऽऽवयोः ॥८७ ॥
नाथ ! पाहि कृपया यथाऽत्र ते, मायया दुरवबोधरूपया ।
प्राड्निगृह्य जगदग्रुधा पुन, मंज्जिनौ नहि भवेव नक्रया ॥८८ ॥
आवयोरहह मोचनाय य, स्वीचकार वत बन्धनं स्वयम् ।
तस्य नौ भगवतः कृपानिधे ! दास्यमस्तु भवतो भवे भवे ॥८९ ॥
इत्थमत्र परिणूय माधव, यक्षरक्षितनयौ प्रमोदिनौ ।
तन्निदेशमपलेश[3]-माप्य तौ, जग्मतु र्जनककेतन जवात् ॥९० ॥
निष्प्रभा प्ररदितस्वनाकुला, स्वप्रवासविकला गतोत्सवाम् ।
तौ चिरेण जननीमिवालकां, लब्धदिव्यविभवावपश्यताम् ॥९१ ॥

१. क्लथन हिंसा ।
२. पुन० व्यति० रूपकाति० प्रेममि ।
३ लेशस्त्वल्पम् ।

गुह्यकेशगृहमभ्युपेतयो[१] केशवस्तवपरा गिरस्तयोः ।
भक्तिभूपगमृतामरोरम-न्निर्भरं शुचि मनो मनस्विनाम् ॥९२ ॥
सन्निशाम्य पततो रथोद्धताः शाखिनो कुलिशदुर्लभा रुतीः ।
कृष्णवंशसविशेषशङ्कया, वल्लवा- सललना- परापतन् ॥९३ ॥
तेऽवगत्य शिशुमण्डलानदा, माधवस्य तरुयुग्मपातनम् ।
दिव्ययो पुरुषयोरथोद्भव, वन्दनञ्च भृशमद्भुत दधुः ॥९४ ॥
क्रीडनव्यसनभाजि शावके, मातृकल्पितकठोरशासनम् ।
शुश्रुवांस्त्वरितमेत्य ता भृश भर्त्सयन् व्रजपतिस्तदाऽवदत् ॥९५ ॥
हन्त ! धिग्विशदवाच्यसारयुग् -गर्गगीश्श्रवणजागृतानपि ।
सर्वदोग्धदनुमात्रभूम्नि ते,[२] केशवे हृदयनैद्रमुद्रणम् ॥९६ ॥
कर्कशा दृषदतोऽप्ययस्मयो,[३] वासवायुधमितश्च ते मनः ।
यद्व्यधायि नवनीतकोमले, निग्रहोऽत्र विषम स्तनन्धये ॥९७ ॥
दुर्विधेन निधिवद्विधौ शुभे, यन्मनोरथशतं रुपार्जितम् ।
योगिभिः स्तुतमनेकधा तु तत्, पुत्ररत्नमवमन्यसे कुतः ? ॥९८ ॥
मार्दवार्दितमृणालकन्दल,[४] क्वेदमीयमुदयत्प्रभ वपुः ।
एवमुज्झितकृपे ! कठोरया, बन्धन क्व विषम वरत्रया ॥९९ ॥
इति निजवधूमत्याचाराद्विगर्हयता चिरा-
दपरुषहृदा नन्देनाङ्के जवादधिरोपितः ।
विकम्पितमुखो दीनोदर्तो विमोचितबन्धनो
व्यतनुत ततः कृष्णो दामोदरेति नवाभिधाम् ॥१०० ॥
अयं 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रथी 'विद्यानाथ'-प्रभव-'वदरीनाथ'-रचितः ।
बुधश्लाघ्यो राधापरिणयमहाकाव्यघटको
निसर्गश्रीः सर्गः परिणतिमवाप्नमुनिमितः ॥१०१ ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के 'यमलार्जुनमोचनो'*
*नाम सप्तमः सर्गः सम्पूर्णः ॥*

१. विरोधालङ्कारः ।
२. विरोधाभासो ध्वनिश्च ।
३. समालङ्कारः ।
४. विषमः ।

# अथ 'वकविध्वंसो' नाम

## अष्टमः सर्गः ॥

अथ[1] दनुजपरम्परोपसर्गास्तनुजजनुर्दिवशाद्वसाय घोषे ।
व्यतनुत हितमन्त्रणं स्वकीयैः सहसहसा हितभीरभीरनाथः ॥१ ॥
द्रुतमुपगतवत्सु तत्रिदेशात्पशुपवरेषु जरत्तरेषु सायम् ।
रहसि हसितवैजयन्तशोभे, व्यधित सदः सदने प्रसद्य नन्दः ॥२ ॥
निभृतमिदमुवाच गोष्ठपालो, विपुलविवेकयशोवयोगुरूणाम् ।
स्पृहयतु वचनाय ग्रालिशोऽय, सदसि कथं प्रथमं भवादृशानाम् ॥३ ॥
अखिलमत्रयता परं गिरं व, कलयितुमेव ममाभिधानमादौ ।
तपतपनखरांशुतापिताना, स्तनितमिवाम्बुधरस्य बर्हिणानाम् ॥४ ॥
प्रसभमनुदिते विमर्शशक्ति-प्रतनुतयोदयभाजि पूर्वपक्षे ।
प्रकटनपटुता तथोपगन्तु, प्रभवति ससदि कोटिरुत्तरा किम् ॥५ ॥
तदिदमवहिता विविच्य यूयं, वदत, यदत्र समाहृतं मतं वः ।
अगणितविपदो वसेम गोष्ठे, किमुत पदान्तरमाश्रयेम सौम्यम् ॥६ ॥
इदमिह न विशिष्य वर्णनीयं, ननु निकटे तदुदन्तवेदिना वः ।
विदधति वति कैतवेन दैत्या, शिशुनिधनाय यदुल्वणानुपाधीन् ॥७ ॥
इतिमितमभिधाय वद्धमौने, पशुपपतावुपनन्दनामधेय ।
सपदि नयविचक्षणः समीक्ष्य, प्रगुणतमायतिमाजहार वाचम् ॥८ ॥
विनयमसृणमेतदुक्तमेव, प्रथयति वल्लवनाथ ! तावकीनम् ।
विपदुपनमनेऽपि दैवयोगात् परिणति- भव्यपरम्पराविकासम् ॥९ ॥
अनुमतमिदमेव न समेषा, प्रचुरमवेक्ष्य दुरात्मनां प्रचारम् ।
[2]त्रिपथदलयुगे न्यय परस्तात्, पशुपपुरन्दर ! यद्भवानवादीत् ॥१० ॥
कुटिलमतिनिसृष्टकालकूटा, कपटपटुर्वत पूतना प्रविष्टा ।
शकटमपि ततः पपात रक्ष, प्रकटमनिष्टमियेष[3] चक्रवात ॥११ ॥
परमभिपततेऽपि दानवानामभिमुखदैववशाददशातमोदान् ।
नियतमयमरक्षदक्षतौजा, रिपुवलयं दलयन् सहात्मनाऽस्मान् ॥१२ ॥

१. इन ९८ श्लोक यात्पुष्पिताग्राछन्द ।
२. विशाय मराय । दल कोटि ।
३. तृणावर्त ।

यदपि सुखमियन्त्यहानि जग्मुः, स्वयमसुराश्च मृषोद्यमा विनेशुः ।
उचितमिह तथापि किंतु तूष्णीं समयरयप्रतिपालनं प्रभो ! नः ॥१३॥
त्यजनमभिजनस्य[१] चापि नूनं स्वजनशिवं समभीप्सुभिर्विधेयम् ।
प्रसरति परमापदां प्रवाहे, व्रजवलयेश ! वदन्ति नीतिनिष्णाः ॥१४॥
सपदि तदपहाय घोषमेतं, दनुजगतागतदूषितं समन्तात् ।
परिकरमखिलं समुह्य वृन्दा-विपिनमुपैतु शिवाय गोपवृन्दम् ॥१५॥
समिति समुदिता हितानुषङ्ग स्फुटमुपनन्दवचोऽवधार्य सर्वे ।
युगपदतिमुदोऽनुमन्वतेस्म, व्रजवसतेः परिवर्तमेव गोपाः ॥१६॥
उदयशिखरमञ्चति ग्रहेशे, तदनु परेद्यवि नित्यकृत्यमुक्ताः ।
व्रजपरिवृढभद्रमोहमाना, झटिति महावनमत्यजन्नभीराः ॥१७॥
पृथुकुचविगलत्पयःप्रवाहैः सरणिरजोव्रजमार्द्रतां नयन्त्यः ।
निविडनिनदनन्दिभद्रवत्सा, प्रययुरलङ्कृतधेनवः पुरस्तात् ॥१८॥
शिशुविगतवयःकलत्रमित्रैः, सममसमद्रविणाः प्रतिष्ठमानाः ।
स्वजनविरहवेदनासहत्व-व्रतमिव रूढमदर्शयन्नभीराः ॥१९॥
धुरि निहितपुरोहिता रथस्था, द्रविणपरिच्छदरक्षणात्तशस्त्राः ।
ततघनसुषिरादि वादयन्तो, वसतिवियोग-शुचाऽऽपि रेजुर्न गोपाः ॥२०॥
कलरवजितकूजिताः पिकाना हरिचरितानि कलासु कीर्तिवित्ताः ।
प्रवहणचलचक्रदत्ततालाः, प्रजगुरभीरनतभ्रुवो गभीरम् ॥२१॥
बहुविधकलगीतवाद्यनादो, विमलदुकूलविभूषणाभिरामः ।
तनुभृदिव महः स दर्शकानां, श्रुतिनयन सुखयन् ययौ समाजः ॥२२॥
अविदितगमनश्रमाः प्रमोदात्, सपदि सलीलमतीत्य मार्गशेषम् ।
वनमनुगिरिराज[२]-माश्रयार्हं, तरणिसुतापुलिनादलोकयस्ते ॥२३॥
सुलभसलिलशष्पमृद्वशाखा-प्रसवनमद्रुमणीरुहं विशालम् ।
अनधिगतखलच्छलप्रवेशं विपिनमथोपययुः प्रशान्तसत्त्वम् ॥२४॥
विविधविकचपुष्पशालि वृन्दा-वनमतिमञ्जु निरूप्य गोपवर्याः ।
विफलमकलयन् स्फुटं विधातुः, दिवि नवनन्दननिर्मितिप्रयत्नम् ॥२५॥
प्रमुदितमनसो निभाल्य शश्वद् वनसुषमासुख-मारुताम्बुतेजाः ।
प्रवहणनिवहैः विमानकल्पैरथ वसतिं समकल्पयन्नभीराः ॥२६॥

१. पूर्वपुरुषनिवासस्थानस्य ।
२. अनुगोवर्धनम् ।

झटिति सितदले प्रयाति वृद्धिं ननु धनुराकृतिरेव शीतरश्मिः ।
इति पशुपकुलं तथाविधं स्व नगनिकटे घटयाम्बभूव वासम् ॥२७ ॥
अचिरविरचितो विशालयाने, हरिततृणे विपिने सितोव्रजस्तै ।
अजयदभिनवोदय सुधांशो, र्नभसि नखक्षतनिर्विशेषविम्बम् ॥२८ ॥
अधिगिरमथ नन्दराजधानी, नृपवृषभानुपुरञ्च तद्विवर्त्तौ[१] ।
अनुदिनवलमानमानकोशौ, त्रिदिवरसातलमत्सरादिवास्ताम् ॥२९ ॥
फणिभवनमधो विवेश लज्जा-विवशमलं पतयालु विप्रकृष्टम् ।
लघु सुरपुरमप्यगच्छदूर्ध्वं ध्रुवमदसीय-तुलाऽधिरोहकाले ॥३० ॥
तदवधि मदमूहिरे चमर्य[२]-श्चपलदृशां घनवालसहते र्वा ।
इह ददृशुरुपेत्य वल्लवीनां, वरनयनान्यलकांश्च नैव यावत् ॥३१ ॥
मृदुसरसतृणान्यवाप्य शश्वत्, प्रमदभरं दधतीषु गोषु गोपा ।
अभिनववसतौ पुराणयोषादपि विपुलं सुखमञ्जसाऽन्वभूवन् ॥३२ ॥
गिरिगहनकलिन्दजा-तटानामनु कलयन् कमनीयता कदाचित् ।
सखिषु निशमयत्सु हृष्टचेता, हलधरमग्रसरो हरिर्बभाषे ॥३३ ॥
मृगमदकुसुमौषधीविशेषै[३] परिसरमध्यशिखासु वासिनोऽस्मिन् ।
शिखरिणि चिरवृद्धवासयोगात् सुरभिपदं सुरभिर्नु तात !लेभे ॥३४ ॥
विविधमणिमरीचिजालसङ्घात्, कुवलयग्रासलरोचिरेषशैलः ।
नमुचिदमनचापसन्निकर्षा- दिव नववारिधरो मनोहरो न ॥३५ ॥
वनमपि किसलैः क्वापि रक्तं क्वचन सुधाधवलं विकासिकाशैः ।
क्वचिदतिहरितं तृणैर्नवीनैः, परिणतपत्रगणैः परत्र पीतम् ॥३६ ॥
क्वचिदिह रसलम्पटोऽतिगुञ्जन्, प्रचललताञ्चलताडितोऽपलज्ज ।
भ्रमति मधुकरोऽभितो विचिन्वन्, विकचनरुप्रकरे चिराम्मरन्दम् ॥३७ ॥
क्वचन पततिनिर्झरोऽद्रिशृङ्गात्, स्फटिकशिलोपरिहारसारकान्ति ।
सलिलकणगणैर्यत स्फुरद्भिः, प्रभवति नोदयितुं तपेऽपि तापं ॥३८ ॥
चिरविरहितवत्सभा कुतश्चिन्, क्षणमवलोकितुमन्तरध्वगानाम् ।
रणरणक-मलं तनोति यूना, तरुनिलयोन्मदचीरिका-[४] निनादः ॥३९ ॥

१. विवर्त्त कारणविषममनान्यकार्यम् । महावन-त्यागान्तर कियन्ति दिनानि वृन्दावनान्ते मध्यैव न्युष्य नन्दो नन्दीश्वरगिरौ वृषभानुर्वरसानुगिरौ च निवासं पृथगकल्पयत् ।
२. गोविशेषा हरिण्यश्च ।
३ यथाग्रहुयन् ।
४ झिल्लीरव ।

रसति सरसिजेषु सारसाली, कवलितकेसरसुस्वरा कुतश्चित् ।
अनुनयमनपेक्ष्य यत्प्रणुन्ना, स्वयमुपगच्छति भामिनीयुवानम् ॥४० ॥
क्वचन कलितबन्धुजीवगन्ध, सरजसलोध्रमरन्दबिन्दुवाही ।
विकसितफलिनीपरागयोगाद् वनमनुवासयति स्फुटं नभस्वान् ॥४१ ॥
शिशिरयति वनं कुतोऽपि वारस्तुहिनगिरेरिव सत्वरं प्रयातः ।
शिथिलयितुमलं यतो न कुञ्जे, दृढपरिरम्भममर्त्यदम्पती स्व· ॥४२ ॥
सरसिजमुचुकुन्दकुन्दचूत-व्रततिशिरीषकदम्बमञ्जुपुर्णं ।
अनिशमिह राम विकासशीलै, रचयति भूषणमादराद्वनश्री· ॥४३ ॥
इह विटपभुजाऽलिनादगीता, स्तवकगुरुस्तनभङ्गुरा सलास्या ।
किसलयमृदुलाधरा रतिं नो व्रततितितिर्वितनोति पुष्पिताग्रा ॥४४ ॥
मुकुलविलसितास्तु शाखिनोऽस्मिन्, पिककलकूजनमञ्जुलाश्च शाखा ।
अपि पिककलकूजितं सरागं, [1] युवजनमानसमोहनश्च राग· ॥४५ ॥
इयमपि सरितांवरा सवृन्दा-वनगिरिपुङ्गवसङ्गमेन धन्या ।
विलसति विकचारविन्दवृन्दा, क्षितिरमणीकवरीव भानुकन्या ॥४६ ॥
विरचितनवकज्जलप्रजरी-कुटिलकटाक्षनतिक्षणक्षिपद्भि· ।
कुवलयनिकरैस्सारङ्गसङ्गाच्चपलतरैरियमेति लक्ष्यलक्ष्मीम् ॥४७ ॥
कुवलयवलय स्फुट जलेऽस्या, धुवमवगन्तुमल न कश्चन स्यात् ।
तरणिकिरणपिञ्जरा· परागच्छुरितमदो यदि केसरास्त्यजेयुः ॥४८ ॥
प्रतिपलमनुमज्जतामघौघ-प्रसभनिरन्तरधावनादिवास्याः ।
अलिकुलमलिनाऽपि किन मूर्ति, सृजति कलिन्दकुलातिचन्द्रकीर्तिम् ॥४९ ॥
धवलतमतया पयोऽवलेपच्छिदि नवनीतविडम्बिनि प्रदिम्ना ।
सुरभिणि पुलिने पतङ्गपुत्र्या, न च न सुखं विहरेम तात नित्यम् ॥५० ॥
इयदनुजवचोऽभिरामभावं, प्रथितकुतूहलमाकलय्य राम ।
स्वयमपि सुषमा क्रमादमीषा, सतृपदृगञ्जलिना पिबन्न तृप्त ॥५१ ॥
निखिलसखिसमन्वितौ ततस्तौ, क्वचन वने, गिरिगह्वरे कुतश्चित् ।
क्वचिदपि यमुनातटेच नित्यं, विरचयत स्म विचित्रबाललीलाम् ॥५२ ॥
मधुभिदमथ हन्तुमुग्रमन्तुं बकमनुग श्रुतचक्रवातघातः ।
यमसदननवातिथिं स्वसारं, परिचरितुं प्रजिघाय चासुरेश ॥५३ ॥

१. एकावली ।

पशुपवर्सतिमन्यत प्रणीता, प्रणिधिमुखादवगत्य सत्यसन्ध ।
विपुलितवकविग्रह- क्षणेन, क्षपयितुमच्युतमाससाद घोषम् ॥५४ ॥
उपसि सपदि भोजिता प्रसूभि, र्वजपतिसद्य समेत्य गोपडिम्भा ।
सहलधरमतत्वरन्मुकुन्द, वनभुवि चारयितुं विहृत्य वत्सान् ॥५५ ॥
कतिचन कवलान् बलाज्जनन्या, वलसचिवो हरिराशितः कथञ्चित् ।
*झटिति धुरि निधाय तर्णकाली*[१]*-मनुयमुनापुलिन तत प्रतस्थे* ॥५६ ॥
पथिमथितमनोभवाभिमान, सहचरनर्मवचोविनोद्यमान ।
समुदमसृजदीक्षिणोऽथमान[२] क्षपणचणो गुणसम्पदाऽसमान- ॥५७ ॥
अधियमुनमपो निपीय हृष्टा स्वयमनुवत्सतराश्च पाय यन्त ।
ददृशुरकृशकायमायताग्र वकमसुर पशुपार्भकास्तमारात् ॥५८ ॥
शिखरमिव गिरेस्तुपारभासो, विकटमदूरचर निरीक्ष्य रक्षः ।
हरिहलधरवर्जमर्भसङ्घो, भृशमभवन्निजजीवने निराशा- ॥५९ ॥
विशकलितबृहत्प्रपञ्चचञ्चु, वकदनुजस्य शिरोधरामपाराम् ।
ध्रुवमतिविभियाद्यमोऽपि पश्यन्, सरलतमा कतमास्तु गोपपोता ॥६० ॥
उडुभिरिव सुधानिधि वयस्यै, र्वृतमपि त परिचित्य भाविशेषै ।
ग्रसितुमिव तमोग्रह- कराल, पतदसुरो रभसेन संन्यकृक्षत् ॥६१ ॥
शिशुपु विपुलसाध्वसेन जाड्य, समनुभवत्सु च शालभञ्जिकावत् ।
कृतपवनजयाद्रयादरगृह्यादकुटिलचञ्चुपुटेन केशव स ॥६२ ॥
झटितिघटितचञ्चुकोटियुग्मो, दनुजपुरन्दर-किङ्करस्तरस्वी ।
द्विजमिव दमनो द्विजिह्वराजे गिलितुमसावुपचक्रमे मुकुन्दम् ॥६३ ॥
जठरदहनजागरूककील-क्षुदपनयं हितमीशितुश्च कर्तुम् ।
द्रुतपथगिलतो गलेऽस्य सोऽस्थाद्गरलमिवाब्धिभवं पुरा पुरारे· ॥६४ ॥
विकटवक्रविधुन्तुदाननान्त, र्निपतति पूर्णकले मुकुन्दचन्द्रे ।
अनुगपशुपडिम्भकैरवालीव्यसनतमोदलिताऽभवद्गतश्री- ॥६५ ॥
अवनिविल-[३] विशालकण्ठनाल, गिलितुमहो न शशाक पक्षिरक्ष ।
रजनिमुखतमोवदाशु काम-प्रकटितवहिमवैभव तदङ्गम् ॥६६ ॥

१ तर्णका वत्सा ।
२. अनश्शकटम् । यमकम् ।
३. अवनिविल पातालम् ।

अतिहुतवहदेह तेजसाऽऽस्यं, भृशमसुरस्य वथा ददाह कृष्ण. ।
निगममिव महर्षियाज्ञवल्क्य, स्वयममुमेष यथोज्जगार सद्य. ॥६७ ॥
कुलिशशकलतीक्ष्ण-चञ्चुकोट्या, हरिमसुरापसदो मदोद्धतोऽहन् ।
न खलु विफलतां गतेऽपियत्ने, विरमति सज्जनबाधनान्नृशंस ॥६८ ॥
प्रखरनखरचञ्चुकोटिघाता, वपुषि शिरीषसुमोपमेऽसुरारेः ।
शुचिरुचिमिव कच्छसन्निपाता, बकवधसत्वरता मनागधिक्षन् ॥६९ ॥
यदचलमनसो हरेस्तदीया, विदधुररुन्तुदमन्तकः क्षमान्तम् ।
दरमपि तदलश्चि नैव कैश्चिद्, रिपुहननात्परमन्वमायि पश्चात् ॥७० ॥
द्रुतमयमवगृह्य तस्य चञ्चू, शययुगलेन विदारयन् सलीलम् ।
तमलुलितबलो यलानुजन्या बकमकरोत्सहवर्तिन भगिन्या ॥७१ ॥
बकविशसनदर्शिनो विमाना-दमृतभुजोमुदमुज्ज्वला प्रपन्ना. ।
कुसुमसमुदय सासाधुवादा, हरिमुपलक्ष्य निचिक्षिपु प्रतीक्ष्यम् ॥७२ ॥
भगवति बकरक्षसा निगीर्णे, समजनि यत्सुहृदा विषादकूटम् ।
विजयिनि तरसा तदेव तस्मिन् प्रमदभरत्वमुपाजगाम तूर्णम् ॥७३ ॥
बलसुबलमुखा वयस्यबाला, सजलदृश· पुलकाचितप्रतीकाः ।
नवविजयसनाथमात्मनाथ, युगपदुपेत्य निकामपालिलिङ्गु· ॥७४ ॥
त्रिपुरजिदसुरीकृत सुहोत्र, [१] सपदि सुरोऽजनि कृष्णसन्निकर्षात् ।
रजतमपि [२] रसानुलेपजन्यं, भवति पुन कनक कृशानुसङ्गात् ॥७५ ॥
बकविदलनविक्रमं मुरारेरनुपदमेव समे समेत्य गोष्ठम् ।
चकितचकितमर्भका गुरूणा, धुरि मधुर सविशेषमाशशसुः ॥७६ ॥
पृथुककथितमाच्युत चरित्रं, व्रजनिलयाः प्रणयान्निशम्य सम्यक् ।
क्षणमुदितमिदम्महत्त्वबोधं व्यधिषत वत्सलतालताप्रतानैः ॥७७ ॥
गिरिविपिनशिखासु जातु बाले, प्रसरति भानुमतो मयूखजाले ।
बकरिपुरथ वत्सचारणेषो, सखिनिवहानुगतो वनान्तमैषीत् ॥७८ ॥
शिखिनमनुननर्त तेषु कश्चित् पिकमपरः कलकूजितैरजैषीत् ।
अखिलमनुजुगुञ्ज लीलयान्यो, बकविजयाय परश्रिराय दध्यौ ॥७९ ॥
अनगयदपरो स्वश्रमेकान्, द्रुतिरभसादनुपुप्लुवे प्लवङ्गान् ।
मृदुमृदुलगिरा परास कीरान् द्विरदवरेण समं जगाम चान्यः ॥८० ॥

१. श्रीकृष्णजन्मखण्डे सर्गितमिदम् ।
२. रस पारदम् । प्रति ।

अरण्यदितरोऽतिमञ्जुवेणु, श्रुतिमृदु कश्चन शृङ्गमेव दध्मौ ।
प्रतिकृतिमपरो हसन् बभाषे, सपदि पर करतालिका तथाऽदात् ॥८१ ॥
हरिणमनुचकार लोलदृष्ट्या कलरवहृद्कृतिमादृतोऽन्ववादीत् ।
विमलकलरवै र्जहास हसान्, प्रतिनिनदानशपन्मुदाऽतिरिक्तः ॥८२ ॥
इति विविधविचेष्टितं र्व्रजेष्टं, कुतुकिनमग्रचरं विनोदयन्त ।
नृपमिव सचिवाससमन्वगच्छन्, प्रणयवशाश्शिशवस्ततो मुकुन्दम् ॥८३ ॥
पृथुकविलसितानि तानि कंस-प्रहितभुजङ्गमदानवोऽथ दृष्ट्वा ॥
निभृतमुदितमत्सरो विहन्तु, तनुमतनु प्रथयन्नगच्छदारात् ॥८४ ॥
सहजयुग-[१] विनाशनिष्क्रयार्थी, तदनु स तद्विपिनाध्वसन्निधाने ।
चरममिव समाधिमादधान, श्वसनशमादतिनिश्चलत्वमूहे ॥८५ ॥
उपनतमथमन्वितार्थसञ्ज्ञं हरिकवलीकृतये विकासितास्यम् ।
अहितमहिनुं तमन्तिकस्थं, व्रजशिशव पुनरन्यथैव जज्ञु ॥८६ ॥
स्थिरविवृतधृतप्रयासविश्व-ग्रसनसमर्थमुखं तदीयकायम् ।
अपिहितमुखकन्दरं गिरीन्द्रं, क्षणमवधार्य ययु क्षण किशोरा ॥८७ ॥
कलयत सुहृदो वतात्र शैल, वशिकं-विचित्रवृहद्दरीसनाथम् ।
जलधररुचितुङ्गशृङ्गमारा-दपरिचित वनदेवतानिकेतम् ॥८८ ॥
भुजगति पुनरायतोऽयमद्रि र्विवृतमुखीयति कन्दरोऽस्य नूनम् ।
रदततिरिव भाति कूटराजी, विसृततरा रसनायते च पद्या ॥८९ ॥
सकुतुकमिदमुत्सुका वदन्त; प्रणयभरेण मिथो गृहीतहस्ता ।
कनकगिरिगुहामिवार्कवाहा; प्रविविशुरास्यमथास्य गोपडिम्भा ॥९० ॥
अनुपदमखिल वयस्यवृन्दं, फणिमुखगर्तनिपाति वीक्षमाण ।
व्यधित वकरिपुस्तदाशुमुक्ते- रनुपममोपयिक सहप्रवेशम् ॥९१ ॥
हतनिजसहजद्वये व्रजेन्द्रौ, सपरिकरे मुखकोटरं प्रविष्टे ।
दशनकुलिशकङ्कनाय वेगा- दघटयदोष्ठपुटं हठेन दैत्य ॥९२ ॥
प्रलयनिशि नु घोरकश्मले वा, किमथिसुषुप्ति रसातलेऽथवा स्मः ।
इयदिह कवलीकृतास्तदानी, किमपि न वोद्धुमशक्नुवन् सखाय ॥९३ ॥
नगरि खलु जहत्सु जीवनाशा, विपमविपत्त्यवनादमीपु कृष्ण ।
प्रसभमर्गशिरो विभिद्य सार्द्धं [२]नदमुभि रात्मसखैर्विनिर्गतोऽभूत् ॥९४ ॥

१. पूतना वकश्च ।
२ सहो० ।

जहुरिह शिशवो विषेण नासून्मदमृतवर्षिनिरीक्षणेन गुप्ताः ।
शशिमणिसरसीकृताः पतङ्गा न हुतभुजा विसृजन्ति चिद्विलासान् ॥९५॥
अनुविदधे दनुजः प्रियस्य जिष्णोः हरिरितिनाम न केवलं स बभ्रे ।
अपितु सुरचमूनिकामकाम्यान्दवहननादहिभित्त्वमप्यवाक्षीत् ॥९६॥
स्मृतिमपि सहसा विहन्त्यघौघं जगति जनस्य यदीयनामधेयम् ।
स्वयमिह स चिरानवाप्तमेकं यदि हतवान्[1] कतमोऽस्तु तेन कीर्तिः ॥९७॥
निधनसमयसन्निधानभाजः करुणगुणो बकविद्विषः प्रसादात् ।
द्रुतविरहितभीमभोगभोगः प्रकटमवाप्यनघो बभूव दैत्यः ॥९८॥
सानन्दं सकुतूहलं सचकितं पश्यत्सु देवेषु त-
ज्ज्योतिर्विश्वविमार्गचारुरशिरः पूर्वाचलाग्रोदितम् ।
सद्यो बालसमाजहृत्कुमरसिजश्रेणीं समुद्बोधयद्
भास्वद्बिम्बमिवाम्बुदेऽसिततनौ कृष्णे तत प्राविशत् ॥९९॥
अथ 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रथीविद्यानाथप्रभव-'धरणीनाथ'-रचिते ।
ययौ राजस्थानानुज-निभृति[2] राधापरिणये
महाकाव्ये सर्गो द्विरदपरिमाणः परिणतिम् ॥१००॥

*इति राधापरिणयमहाकाव्ये 'बकविद्रावणो'*
*नामाष्टमः सर्गः सम्पूर्णः ।*

१. स्यात्कीर्तिः ।
२. राजस्थानसम्थान नाम खण्डकाव्यम् ।

*॥इति प्रथमाष्टमः सर्गः॥*

## अथ 'वत्सप्रमोषो' नाम
## नवमः सर्गः ।

श्रीकृष्णोऽथ प्रातराशान्निवृत्तो, वृन्दाटव्यां तर्णका[1]-ञ्चारयिष्यन् ।
सध्रीचः[2] स्वानङ्गसैवाजुहूषु, र्यात्राशंसी वादयामास वंशीम् ॥१ ॥
वेणुस्वानं मञ्जुमाकर्णयन्तो, मध्याह्नाशं वाससादाय सर्वे ।
पूर्णानन्दास्तूर्णमुन्मुच्य तर्णान्, प्रापुर्नन्दद्वारमाभीरडिम्भाः ॥२ ॥
हम्भारावैरुत्प्लुतैः पार्श्वमर्शैः, स्निग्धालोकैरग्रतश्च प्रयाणैः ।
यात्रौत्सुक्यं दर्शयन्तो नितान्तं, श्रीवत्साङ्कं पर्यवेष्टन्त वत्साः ॥३ ॥
चित्राकल्पैर्द्वारि सम्भूय मित्रैः, प्रस्थाप्याग्रे वल्लभं वत्सवृन्दम् ।
पृष्ठं प्रेम्णा रौहिणेयं च कृत्वा, आयाल्लीलालोलुपो बालकृष्णः ॥४ ॥
दृष्ट्या साराब्धपीयूषवृष्ट्या, हृष्टं कुर्वन् वात्सकं सन्निकृष्टम् ।
बालैर्मार्गे नद्धमालैः समन्ताद् बद्धालापः प्रीतिमद्धाऽच्युतोऽधात् ॥५ ॥
नृत्यं गत्यैवाचरन्तो विचित्रं, नन्दग्रामान्निस्सृता गोपबालाः ।
सौधोत्सङ्गादङ्गनाभिः सलीलं दृष्टादृष्टिं चोरयामासुरासाम् ॥६ ॥
गायन्तस्ते रागमाश्रित्य रम्यं, मन्दं मन्दं वादयन्तश्च वंशीम् ।
अभ्यर्णस्थोत्कर्णगोकर्ण[3]-वर्गे, मार्गेऽकुर्वन्नुत्सुकां राजहंसीम् ॥७ ॥
श्रावं श्रावं कृष्णवंशीनिनादं, दर्शं दर्शं तन्मुखाम्भोजशोभाम् ।
व्यावल्गन्त शाद्वलेषु प्रकामं वत्साश्चेरुः प्राप्य वृन्दावनान्तम् ॥८ ॥
शाखारूढः कोऽपि कीशानुकारं, दोलालीलां कश्चनालम्ब्य वल्लीम् ।
गुच्छैरच्छैर्मण्डनं च प्रवालैश्चक्रे कश्चित्तेषु गोपालबालः ॥९ ॥
भ्रान्त्वा भ्रान्त्वा तर्णकांश्चारयन्तौ, लक्षं लक्षं कान्तकान्तारलक्ष्मीम् ।
मित्रालापैः शश्वदामोद्यमानौ, सानौ कामं चेरतू रामकृष्णौ ॥१० ॥
विष्वग्वत्सान् रक्षितुं सञ्चरिष्णूंस्तत्रादभ्रं भ्राम्यतामर्भकाणाम् ।
सौरैस्तापैर्दापितास्कन्धभानं, वक्त्राम्भोजं विद्रुमाभां बभार ॥११ ॥
यामे प्राचि प्राप्तसत्ताविरामे, वत्सग्रामे पातुकामे च तोयम् ।
कृष्णाग्रण्योऽरण्यवीक्षावितृष्णा, जग्मुः कृष्णामाशु बाला सतृष्णाः ॥१२ ॥

१ तर्णका वत्सा । इत आरभ्य ९० श्लोक यावच्छालिनीच्छन्द ।
२ सहायान् ।
३ गोकर्णो मृगविशेष ।

वृन्दारण्यान्निर्गता गोपडिम्भा, गम्भीरे ते सैकते सञ्चरन्तः ।
नव्याम्भोदश्रेणिभासोऽर्कजाया, दूरात्पूरालोकनेनैव हृष्टाः ॥१३ ॥
स्वैरं दूरादागतोऽनन्तराला[1] वीचिस्पर्शो यामुनो गन्धवाहः ।
प्राहणे सद्योऽव्यध्वसञ्चारलब्धां, स्वान्तैः साकं क्लान्तिमेषामहार्षीत् ॥१४ ॥
उत्पुच्छाग्राः सन्नदत्क्षुद्रघण्टाः, पश्चाद्धावत्पालका स्तब्धकायाः ।
वत्साः प्रत्यासेदुरालोक्य नीरं, तीरं छायाशालि कालिन्दिकायाः ॥१५ ॥
कृष्णाकूले शीतले शाखिमूले, तोयं पीत्वा सूपविष्टा वयस्याः ।
श्रीदामाद्याः कौतुकोदञ्चितास्ते, हस्तग्राहं व्याहरन्नन्दसूनुम् ॥१६ ॥
त्वत्सम्बन्धादात्मसौभाग्यगर्वं, बिभ्राणाऽलं फेनपुञ्जच्छलेन ।
अप्युच्चैःस्थां स्वर्गगङ्गां हसन्ती, कालिन्दीयं त्वां हरे ! सन्निधत्ते ॥१७ ॥
कृष्णामेनां कृष्ण सावर्ण्ययोगादुत्प्रेमाणं सीकरस्वेदपूर्णाम् ।
लोलेनाराद्वीचिहस्तेन गाढा-श्लेषाय त्वामाह्वयन्तीं प्रतीमः ॥१८ ॥
निर्व्यापाराऽनन्यचिन्ताविशङ्का, त्वां ध्यायन्ती कीटवद्भृङ्गरूपम् ।
नूनं धन्या कृष्ण ! मार्तण्डकन्या, त्वत्सारूप्यं श्रीपते ! साधु लेभे ॥१९ ॥
अङ्गैतस्याः सैकतच्छद्मनेदं, सूक्ष्मं भाति क्षौमशुभ्रोत्तरीयम् ।
यस्यान्तःस्थो हंसराजीरवात्मा, प्रीणात्यस्मान् किङ्किणीनिस्वनोऽयम् ॥२० ॥
व्याकोशेयं किञ्च कल्लोललोला, पश्य स्वामिन्नायतेन्दीवराली ।
प्रीतिस्फीतां चञ्चलां कज्जलाक्तां, त्वय्येतस्याः स्पर्धते दृष्टिपालीम्[2] ॥२१ ॥
भानुस्तीव्रैस्तापितः स्वैर्मयूखैः श्रान्तः शान्तिं क्वाप्यनाप्यागहस्तः ।
ध्वस्तस्तम्भः पश्य नूनं निमग्नः, शेते शीते यामुने वारिपूरे ॥२२ ॥
पुत्रीमेनां विप्रयोगेण खिन्नामाक्रन्दन्तीं स्फारधारानिनादैः ।
प्रत्यासन्नो वत्सलः सान्त्वयिष्यन्, मध्येपूरं तेजसां राशिरास्ते ॥२३ ॥
न्यक्कृत्याशु ध्वान्तरूपं प्रतीपं भूयः स्वीयं व्योमराज्यं मयाप्तम् ।
एतत्पुत्रीं वक्तुमागादिवार्कः, प्रायः सर्वे सुश्रवा बन्धुवृद्धिः ॥२४ ॥
व्यक्तामोदाः स्मेररक्ताब्जवक्त्रा, स्पृष्ट्वाऽतृप्यन् पद्मिनीं द्राक्करा‍ग्रैः ।
नन्वेकान्ताश्लेषमारात् विधातुं कृष्णापूरं प्राविशद्वासरेशः ॥२५ ॥
प्रत्यूषेषु प्रत्यहं ये मयूखैः, ध्वान्तस्तोमा भास्वता पीतपूर्वाः ।
धाराकारास्तीव्रतापाद्विलीनास्तेऽमी कृष्णाकैतवेनाविरासन् ॥२६ ॥

१ अविरल ।
२ 'एतस्या इयमिन्दीवराली त्वयि विद्यमानां दृष्टिपालीं स्पर्धते' इति पदयः । - सम्पादक ।

शाखिव्राते विस्मिते वीक्षमाणे, हुङ्कुर्वाणे शिक्षके चालिवर्गे ।
पद्मव्यूहे यामुनोत्सङ्गफुल्ले, क्रीडत्येषा ही[1] ! दिवाश्री सवित्रा ॥२७ ॥
वालेनैव प्रौढिमाश्रित्य येन, प्रायश्चक्रे पद्मिनीपालिकेलि ।
वस्वाद्‌योऽपि भ्राजमानस्तथोच्चै- सोऽय कुर्यात्किं न तारुण्यपूर्णः ॥२८ ॥
मित्रम्यैक मित्रमेतत्सरोजं साकं तेन प्रातरुल्लाससीति ।
साय म्लानिं याति यच्चानपेक्ष, दु खे सौख्ये तुल्यवृत्तिर्हि मन्त्री ॥२९ ॥
आरूढोऽय व्योमसौधोत्तमाङ्ग लोकाचार लोकितु लोकसाक्षी ।
तीक्ष्णानस्त्रान् किं न दत्वा सहस्र, दिव्याक्षीणि क्षिप्रमादित्सतीन्द्रात् ॥३० ॥
एतन्मित्र ! त्वद्वपु स्वेदविन्दून्, मुग्धाकारन्दुग्धभासो दधानम् ।
व्यक्तम्मुक्ताविभ्रत वाहिवाह, जित्वा धत्ते निष्प्रतिद्वन्द्वलक्ष्मीम् ॥३१ ॥
सङ्कुच्यारादङ्घ्रिमूले पतन्ती-, श्छायालोलास्तामसी भानुभीता ।
आवृण्वाना मर्षयन्तोऽतितापं, वृक्षा नून शिक्षिता दीनरक्षाम् ॥३२ ॥
सन्तापेन व्याकुल तिग्मरश्मे, पश्येदानीं विश्वमेतत्समस्तम् ।
जृम्भन्तेऽमू कोमलास्त्वम्बुजिन्यो, नूनं योषा सर्वथा नाथ ! वामा. ॥३३ ॥
इत्थन्नर्मालापसक्तानशाक्तान्, ज्ञातुम्बालाजघ्थि-[2]कालातिपातम् ॥
स्तोक कृष्णस्तोककृष्णप्रधानान्, गेयाचारस्तान् प्रणेयानवोचत् ॥३४ ॥
पर्यन्तेऽस्मिन् पावने पूपपुन्या प्राज्यच्छाये पादपैरस्ततापे ।
कीरश्रेणीपक्षभाक्षेपदक्षे, स्वैरं वत्सा. शाद्वले नश्चरन्ति ॥३५ ॥
आयातेय किञ्च मध्याह्नवेला, खेला तावत्तिष्ठतु प्रस्तुता न· ।
मित्राणि प्राग्भोक्तुमेवारभध्वं, मूल ह्याहुः कर्मणा क्षुद्विरामम् ॥३६ ॥
इत्याकर्ण्य प्रेमपूर्णं वचस्ते, तत्राशादे मञ्जुलश्लक्ष्णशादे ।
कृष्णातीरेऽयललभ्याच्छनीरे, कृष्णादेशात्प्रावृतन् भोक्तुमर्भाः ॥३७ ॥
पत्रावल्यामञ्जलौ प्राश्नि वल्के, मृत्पात्रे वाऽमी यथास्वानुकूल्यम् ।
नानास्वादान् भोज्यवस्तुप्रकारान् कृष्णेऽध्यक्षे पर्यविक्षन्त[3] वालाः ॥३८ ॥
कश्चित्तेषां शष्कुलीराद मृद्वी, मृद्वीकाद्यै पूरितान् कोऽपि पूपान् ।
अन्यो धन्य खण्ड खण्डैरहीन, रम्यम्वादासक्तिहैयङ्गवीनम् ॥३९ ॥

१ अत्याश्चर्यम् ।
२ जघिधर्भोजनम् ।
३. पर्यविविशु ।

एको लाजान् खण्डमिश्रानजस्रं, कश्चिद्वाञ्छाभृद्गुडाक्तं करम्भम् ।
कृष्णाजाजीहिङ्गुशुण्ठीप्रधानै, पूर्णं पोलिं वेषवारैस्तथाऽन्यः ॥४० ॥
क्षौद्रद्राक्षाशर्करानारिकेली-खर्जूराद्यै राचितं सौरभाढ्यम् ।
श्यामाकीय पायस स्वादु शूरो, भुञ्जानोऽन्यो भीममैत्रीमवापत् ॥४१ ॥
प्रक्रम्यात्तु कूर्चिकामेव कश्चित्, प्राभृन्नैव त्यक्तुमातृप्ति लुब्धः ।
को वा लोके चेतन प्राप्तमिष्ट स्वव्यापारादञ्जसा हातुमीष्टे ॥४२ ॥
सलिह्यान्य सद्रसाना समष्टि, तुष्टो बाल स्वाप भूयो रसालाम् ।
एकस्वादा दुर्लभामल्पमात्रा, तुच्छमच्छात्मा मुधामप्यवेदीत् ॥४३ ॥
पीत्वाऽदभ्र दुग्धमेतेषु कोपि, स्वच्छाभासच्छद्मना निर्जरौघम् ।
धन्यम्मन्य दभ्रपीयूषपानादुच्चैरास्यो वृत्तहास्यो ददर्श ॥४४ ॥
विम्ब चान्द्र भूरिपीयूषसान्द्र, बारबार देववर्दैवलब्धम् ।
कूर्तेष्वूत मञ्जुपञ्च मत्त जम्बिर कश्चिज्ज जूपन्नतूयत् ॥४५ ॥
सुव्याहाराहारसूक्तेषु तेषु, स्वाध्यर्थेषु भ्रान्तभूमौ चरन्तः ।
वत्सा दूर शष्पलोभेन नीता, नाङ्गैर्जय्या ह्यान्तरा षट् सपत्नाः ॥४६ ॥
प्रत्यग्र माग्नद्रुत कोमलाङ्ग प्रत्यग्र ते शाद[1]-मासादयन्तः ।
वेधोवाञ्छापूरणायेव तर्णाः सद्योऽमुञ्चन् बालदृग्गोचरत्वम् ॥४७ ॥
पूर्व व्यालाद्बाधन बालकानां, पश्चाद् दृष्ट्वा रक्षसस्तस्य मोक्षम् ।
धातुश्चित्ते प्रादुरासीद्वितर्को, हेतुव्यूहे सत्यवश्य हि कार्यम् ॥४८ ॥
आस्ते साक्षादीश्वरश्चेत्तदाऽयं क्षुद्रेणैकेनाहिना किं निगीर्णः ।
रक्षस्तादृक् पापपाशावनद्धं गोपो वा कः कर्तुमीशीत मुक्तम् ॥४९ ॥
क्वायं मुग्धो गोपपोतः, क्व चैष, प्रत्यासन्नो भोगिरक्षोविमोक्षः ।
ईशो वाऽसौ मायिको वेत्यवश्यं, यत्नादेनं तत्परीक्षेय सद्यः ॥५० ॥
गोपालश्चेदेष नूनं विषीदेन्मुह्यन्ति द्रागापदि ह्यल्पसत्त्वाः ।
ईशश्चेद्वा, दर्शयेत्स्वप्रभावं, तेजोभाजः किं क्षमन्ते निकारम् ॥५१ ॥
एव चेतस्यध्यवस्यन् विरिञ्चश्छित्वा सर्वान्दूरगानाशु वत्सान् ।
क्षुभ्यद्गात्रोऽचूचुरत्पार्श्वदर्शी, नीचैःकृत्ये सूषश्चा हि भीतिः ॥५२ ॥
धातुर्यस्यैवार्थनाभिर्दयावानङ्गीचक्रे चक्रपाणिस्तनूं ताम् ।
चित्रं नैतत्सोऽपि यत्तं न जज्ञावज्ञानं हि प्रायशोऽनीश्वराणाम् ॥५३ ॥

१. हरिततृणम् ।

उत्तिष्ठासून् वत्ससंरोधनार्थं, श्रीगोविन्दो वारयामास वन्धून् ।
अश्नीताहो का त्वरा वो न किंमे, तानानेतुं शक्तिरेतद् ब्रुवाण· ॥५४ ॥
विसव्धाना सग्धि[१]-भाजाममीषा, वत्सव्रात स्वप्रतिज्ञातपाली ।
कान्तारान्तेऽन्वेष्टुमुत्कोऽथ कृष्णो, लीला काञ्चित् किञ्च कर्तुं प्रतस्थे ॥५५ ॥
शष्पाकृष्टस्वान्तमन्तर्वणे तद्, दूरं यात तर्णवृन्द मुकुन्द ।
आहूयापि स्निग्धरावैरविन्दन्, खेद वेदानन्दकन्द स्म मन्दम् ॥५६ ॥
तावद्वालानप्यहो कृष्णहीनान्, धाता कर्तुं तत्परीक्षामहार्षीत् ।
किन्तु स्वस्यैवामुनाऽभूत्परीक्षा, सिद्धि· कार्ये कस्य वाञ्छाऽनुरूपा ॥५७ ॥
अल्पीयस्तद्ध्वान्तमिद्धार्कगुप्त्यै,[२]वृहद्वह्निच्छादनार्थं तृणं  वा ।
प्रज्ञानात्मश्रीद्धमाहात्म्यकृष्ण-व्योमो हायच्छद्मयत्पद्मयोने  ॥५८ ॥
क्षिप्र प्रत्यावृत्य तीरेऽपि तद्वत्, कृष्णोऽलव्ध्वा भोजिन स्वान्वयस्यान् ।
शून्या पश्यश्छिन्नमात्र सकाष्ठा, काष्ठामात्रं चित्रपात्र तदासीत् ॥५९ ॥
अन्तर्यामी सन्दिहानस्य सर्व, सद्योऽवेत्य व्याजमम्भोजयोने ।
रूप तत्तद्वालवत्सानुरूप, देधे देवो मायिना चक्रवर्त्ती ॥६० ॥
ईहालेशश्चित्ररूप निमेषाद्, भूयोभूय सूयते यस्य विश्वम् ।
तस्यैशित्वभाजितस्यैयतीना, मूर्त्तीना स्यान्निर्मिती को विलम्वः ॥६१ ॥
प्रेमग्रह्व पुत्रभावेन नित्य, गोपालानां काङ्क्षता कृष्णचन्द्रः ।
पूर्णीकुर्वन्नाशु कामं निकाम, तत्तद्रूपीभूय तानन्वगृह्णात् ॥६२ ॥
स्वाविर्भूतैरन्वितो वालवत्सैरित्थ प्रात प्रत्यह दूरमित्वा ।
प्रत्यावृत्तो वासरान्ते निशान्त, भानुर्यद्वद्भानुभी रत्नसानुम् ॥६३ ॥
ता जानीयुस्ते कथ लेशतोऽपि, स्वच्छस्वान्ता गोदुह· कृष्णमायाम् ।
आत्मारामो यत्र रामोऽपि साक्षाज् जिज्ञासार्तोऽधात्चिरायाज्ञभावम् ॥६४ ॥
ताटस्थ्येन भाजिते निर्गुणोऽपि, स्नेहो यस्मिन् योगिनां निर्विकल्प· ।
प्रेमानन्य तत्र पुत्रे गुणानामेकाधारे नाद्भुत वल्लवानाम् ॥६५ ॥
यत्सम्वन्धादन्यतोऽप्येति राग, साक्षात्तस्मिन्नाश्रयत्यात्मजत्वम् ।
गोगोपालीगोपजातस्य कृष्णे, का वाऽस्माकं तत्परिच्छेदचिन्ता ॥६६ ॥

१ सग्धि सहभोजनम् ।
२. मालानिदर्शना ।

यात्यज्ञातव्यत्यये तत्र निम्यैं[1] काष्ठाकल्पे वत्सरेऽनल्पमोदे । 
कृष्णाकूले क्रीडतः पूर्ववत्तान्, पश्यन् वत्सांविस्मयस्यास्त वेधाः ॥६७ ॥
मान्द्राम्भोदश्यामलान् पीतवस्त्रान्, हारोरस्कान् वेणुपाणीनशेषान् ।
साकं वत्सैरन्वयान् वीक्ष्य बालान्, मायालीनोऽभूत्स्वयं स स्वयम्भूः ॥६८ ।
दुग्धस्वच्छा चन्द्रिकेवान्तरीक्षं, धाराम्भोदोत्वाच्छिन्ना भूमिपृष्ठम् ।
धातुश्चित्तं नीरजीकृत्य तावत्, कार्ष्णी माया सर्वतोऽचीचकासत् ॥६९ ॥
अन्तर्धानं ये गता बालवत्सास्तत्सामग्र्य बिभ्रतस्तुल्यवृत्ते. ।
नेद जाने क्रीडतो गोपसूनोः कोऽयं कायव्यूहलीलाविलासः ॥७० ॥
नत्वास्माभिः नायिता मोहयित्वा, सन्त्यत्रैते तर्हि केऽमी वराकाः ।
अस्वप्स्वेत. कश्मले मज्जयन्त, सद्य. कस्मादाविरासत्र कस्मात् ॥७१ ॥
आसीदीदृक् पूर्वमेकस्त्वनेके, दृश्यन्तेऽमी साम्प्रतं तत्स्वरूपा ।
मोहं नूनं नो विधातुं परात्मा, गोगोपाभीभूय खेलत्यवेलम् ॥७२ ॥
इत्यालोच्यालोक्य तस्यानुभावं, भीतस्तत्त्वप्रत्ययाद् वृन्नकूटं ।
भक्तिप्रह्वो विश्ववन्द्योऽपि वेधा, नम्रः स्तोतुं प्रावृतग्रन्दसूनुम् ॥७३ ॥
किं जानीयाश्चाथ पारंपरार्ध-ब्रह्माण्डेश ! त्वामगं जन्तुरेकः ॥
किं गोत्रालिग्रन्थिभाजं गरीयो गोत्रागोलं धातुमीशीत दंशः ॥७४ ॥
जज्ञे नन्दादप्यजस्तस्य पत्न्या बद्धोऽप्यद्धा योऽपरिच्छेद्यकायः ।
स्तैन्यं चक्रेऽपीश्वरो नावनीतं, कस्तं स्तोतुं चित्रवृत्तिं समर्थः ॥७५ ॥
एको भूयानप्यनादिस्तथादिः, जीवान्, विष्वक् प्रेरयन्नप्यनीहः ।
सर्वाधारो धीयमानश्च सर्वैः, स्वान्तेन त्वं विश्वरूपोऽप्यरूप ॥७६ ॥
दण्डं चक्रं वारि सूत्रं मृदं वा, नापेक्ष्य त्वं निर्मिमीषे परात्मन् ।
ब्रह्माण्डाख्यं भाण्डमेतत्तथापि, लत्तो नैते किं कुलालास्त्रपन्ते ॥७७ ॥
लोकेशोऽहं सृष्टियोग्य प्रजानामेकोऽविद्यानीक्षितो निर्विकार. ।
प्रज्ञामूलं स्वैरचारीत्यखर्वो, गर्वो मेऽस्तस्त्वां विलोक्याद्य सद्य ॥७८ ॥
धृत्वा नाना भूमिकाश्चित्रचित्राः, क्रीडस्येको रञ्जयँल्लोकचेत. ।
मद्दुर्बुद्धिध्वंसनार्थं त्वमस्मिन् स्वामिन् मायारूपके सूत्रधारः ॥७९ ॥
नूनं नाकाद्दुस्तमामावनीयं, घोषोऽप्येषोऽभूद्गुरुः पत्तनानाम् ।
जाता वर्ज्येपूतमा गोपजातिः, साक्षाद्यत्र त्वं परेशोऽवतीर्णः ॥८० ॥

१. निस्वाऽन्नमानम् । काष्ठ द्वादशनिमेषावच्छिन्नःकाल- ।

भूम्येवैषा पूजनीया परेभ्यो, लोकेभ्यो मत्सङ्गमादित्यनीचैः ।
लोकान् प्रायो बोधयस्त्वं स्वकीयं पादाम्भोजैरर्चसि श्रीपतेऽमूम् ॥८१ ॥
कामेऽज्ञस्य त्वद् गुणानामशेषं, व्याख्याने स्यादौचिती चिन्मयात्मन् ।
सर्वज्ञस्य श्रीश ! कर्तुं श्रुतीना यत्राशक्तिस्तेऽपि जागर्ति जाने ॥८२ ॥
तत्त्वाज्ञानोज्जृम्भितोऽयं दयालो तात क्षम्योऽतिक्रमो मे त्वयाऽद्य. ॥
नाबोधोत्थं किं शिशूपद्रवं वा, विश्वोद्धाविन् तातपादा सहन्ते ॥८३ ॥
आत्माराम निर्विराम सराम, न्यञ्चत्काम[1] पूर्णकामं न कामम् ।
वाम वाम गर्वदुर्वासनाना, नाम नाम त्वां शरण्यं प्रपद्ये ॥८४ ॥
पिच्छापीडा स्वच्छतापिच्छकान्ति, वींणावाणि वेंणुपाणि प्रवीणा ।
गुञ्जामाला मञ्जुला मूर्त्तिरेषा, स्वान्ते ध्वान्तं संहरन्ती ममास्ताम् ॥८५ ॥
देव कृष्णश्चारुविद्युद्वकाली-शालीन्द्रास्त्रद्युत्पयोदानुकारी ।
हारी रत्नैर्मण्डित पीतवासा-, भासा चेतश्चातकं नन्दयेन्मे ॥८६ ॥
अक्षय्यश्रीराजिगोलोकराज ! श्रीकृष्ण ! त्वत्पादपद्म गतिर्मे ।
मैव भूयो दीनबन्धो ! कदाचित्, कुर्य्यामितत्राथ ! नाथाम्यनाथ ॥८७ ॥
श्रीगोपालप्रीतये प्रश्रितात्मा, स्तोम[2] स्तोम सौम्यमास्येश्चतुर्भि ।
तत्रातन्वन्नप्रयासेन लेभे, वेधा ववत्राधिक्यसार्थक्यमद्धा ॥८८ ॥
प्रेमोदञ्चद्वाष्पसरुद्धकण्ठः, स्तोतुं पश्चादक्षमो नाभिजन्मा ।
पादाम्भोजे त्रस्नुराश्रित्य दोर्भ्यां गोविन्दाग्रे दण्डवन्निष्पपात ॥८९ ॥
श्रेष्ठे दर्पादाभिचारक्रियेव, त्रैलोक्येशे नन्दसूनौ प्रयुक्ता ।
स्रष्टुर्माया स्वाभिभूत्यैव सार्धा द्रष्टुश्चक्रे कौतुकश्चोपदेशम् ॥९० ॥
[3] स्वोत्पत्तिमूलमवगम्य किमब्जयोनि-
र्भर्तुं पदाब्जयुगमेव तदाऽऽललम्बे ।
एका गतिः कृतवतोऽप्यहितं प्रभूणां
कोपापनोदनिपुणं खलु बन्धुवर्गः ॥९१ ॥
स्मेरश्चिर मुकुटकोटिनिविष्टरत्न-
प्रद्योतमेदुरितमञ्जुलपादकञ्जम् ।

१ न्यञ्चन् कामो यस्मात् ।
२ स्तोमःस्तव ।
३ इत पर ९८ श्लोक यावद् वसन्ततिलक छन्द ।

उत्थाप्य गाढकरुणः परिरभ्य दोर्भ्या-
माश्वासयन्नभिदधे द्रुहिणं मुकुन्दः ॥९२ ॥
मूकीबभूव तपसैव स पञ्चवक्त्र
कः षण्मुखो बत शिशुः शिखिसक्तचित्तः ।
स्वस्थः सहस्रवदनो न धराभरार्तेः
कस्त्वत्समोऽस्ति चतुरानन मत्तवेऽन्यः ॥९३ ॥
माया नटी कपटवेषपटुर्जनानां,
चेतश्चमत्कृतिकरी चपलाऽस्ति या मे ।
मोक्षाद्धेशङ्कितमानस ! मत्परीक्षा-
दीक्षादवे मदशमाय तयैव तुभ्यम् ॥९४ ॥
सा केवलं स्मयतमश्शमनाय ते द्रा-
गद्योति सत्यक ! मया मतिकौमुदीयम् ।
तन्मा विषीद कमलासन ! किं गुरूणा-
मुन्मत्तबालविनयाय कियान्न यत्नः ॥९५ ॥
यस्या विलासकलयैव जगत्समस्तं,
विस्रस्तबोधमनुरोधरतं प्रपञ्चे ।
सैवेयमद्भुतगतिः कुतुकादविद्या,
ब्रह्मन् ! भवन्तमपि धृष्णुरनर्तयद् द्राक् ॥९६ ॥
एकं विहाय जनकं ननु मा पिशाची,
माया न मोहयति कं नियतं प्रपञ्चे ।
तद्धैर्यमावह विधेहि विधे ! हितार्थं,
लोकस्य कस्यचन चिन्तय नाशुभं त्वम् ॥९७ ॥
अस्मत्प्रसादजविवेकभृतं भवन्तं,
भूयो विरिञ्च ! विधुरीकुरुतान्न मोहः ।
आकाशमाकलितभानुकरप्रकाशं,
शक्येन्मलीमसयितुं क्व तमःप्ररोहः ॥९८ ॥
इत्थं तथ्यं विधुरितसुधरत्पकार्यं वचोभि-
र्जाताश्वासं त्रिधिमभिमतं देशमादिश्य गन्तुम् ।

लीलालोकाच्चकितचकितैः स्तूयमानश्च मित्रैः
सार्धं वत्सैर्वियुतमिलितैः[1] नन्दसूनुश्च कृष्णः[2] ॥९९॥
अयं 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रधी-'विद्यानाथ'- प्रभव-'बदरीनाथ'-रचित ।
अगच्छद्विच्छित्तिप्रथिमपुषि राधापरिणये,
महाकाव्ये सर्गो यतिमनवम[3]-श्चापि नवमः ॥१००॥

*इतिश्रीराधापरिणयमहाकाव्ये कृष्णाङ्के 'वत्सप्रमोपो' नाम नवमः सर्गः सम्पूर्णः ।*

१ पूर्वं वियुता पश्चान्मिलिता ये तैः ।
२ मन्दाक्रान्ता छन्दः ।
३. अनिकृष्ट-॥

*॥ इति प्रभाया नवमः सर्गः सम्पूर्णः ॥*

## अथ 'कालिय-निग्रहो' नाम
## दशमः सर्गः

अथाखिलखलोद्यमक्षपण-साधुसद्भावन-
प्रपञ्चनिपुणः श्रुतस्तुतगुणः सुहृत्संवृतः ।
निधाय धुरि गाः प्रगे[1]प्रवणतर्णकाः कर्हिचि-
ज्जगाम मधुसूदनो हलधरं विना काननम् ॥१॥
व्रजाद् व्रजति केशवे रणति मञ्जु वेणौ मुहु-
र्बभूव हरिणीदृशां तरलितं मनो बोधितुम् ।
विहाय गृहकर्म ताः सरणिसन्निकृष्टाः क्षणं,
दृगम्बुजकदम्बकैः विकसितैरिवार्चन्नमुम् ॥२॥
निशम्य मुरलीकलं कुलनतभ्रुवोऽप्युत्सुका,
गृहात्प्रचलितुं यदि गुरुनियन्त्रणादक्षमा ।
गवाक्षसुषिरान्तरं हरिमवेक्षमाणाश्चिरं
मनोरथमहार्णवं स्ववजगाहिरेऽनेकधा ॥३॥
विलोक्य मुरजिन्मुखं सफलतां दृशोर्जानती,
जगाद जरती व्रजे चिबुकलग्नहस्ताङ्गुलिः ।
ध्रुवं कुलिशकर्कशं बत यशोमती[2]मानसं,
घनं वनमसौ शिशुः प्रतिदिनं यया प्रेष्यते ॥४॥
कियत्सुकृतमर्जितं खलु यशोदया, येन सा,
जयन्तमिव दानवानपि जयन्तमेनं सुतम् ।
मनोरमतमं वशीकृतपतिः प्रसूयाञ्जसा,
पुरन्ध्रिपरिपन्मणिर्जगति साम्प्रतं राजते ॥५॥
असौ मदनसुन्दरो व्रजपुरन्दरस्यात्मजः,
प्रयाति विपिनेऽधुना सुमुखि ! सन्निकृष्टाध्वना ।
कदर्थयसि किं दृशौ सखि ! विलोकय द्रागिति,
त्वरातरलिताऽभ्यधात्नवनधूं प्रियाली क्वचित् ॥६॥

१. प्रभाते । इतआरभ्य ९१ श्लोकं यावत्पृथ्वीलता छन्दः ।
२. इदं यशोदानाम ।

पुरश्चलितनैचिकी[1] खुररजस्समूहे शनै-
रुदञ्चयति विभ्रम नभसि धूमयोने मनाक् ।
सुहृद्धृदयकैरवप्रकरमञ्जसोल्लासयन्
व्रजेन्द्रसुतचन्द्रिरोऽध्वनि चलन्निरङ्को बभौ ॥७ ॥
नभोभ्रमणकौतुकं ललितचुङ्कृतिक्ष्वेलिका-
मपास्य निभृतस्रवन्नयनवारि विस्रम्भिणाम् ।
शनैरुपरि पार्श्वयोः प्रचलतां प्रशान्तात्मनां,
जहार वयसां मनः पथि वकारिवंशीस्वनः ॥८ ॥
निभाल्य गरुडध्वजङ्कुवलयाभिरामच्छविं,
नवीनघनशङ्कया प्रमदसम्भ्रमान्दोलितः ।
समेधितकलध्वनिः सुचिरमध्वन सन्निधौ
ननर्त शिशुमण्डलीरतिकरो मयूरोत्करः ॥९ ॥
मुकुन्दपदपङ्कजद्वयपरागपुञ्ज मुहु-
र्ग्रहीतुमिव सादरन्नमितदीर्घशाखाभुजा ।
लसत्कुसुमलोचना ददृशिरे जडन्वाञ्चिता-
श्चलन्मधुपझङ्कृतिस्तुतिगिरः पुरः पादपाः ॥१० ॥
धराऽपि दयितासकृच्चरणपङ्कजस्पर्शन-
प्रसक्तसुखसन्ततीरनुभवन्त्यभूदुत्सुका ।
चकार तदसंशयं सहभुवा जडिम्ना समं,
स्फुरन्नवरजोवपुः पुलकजालमस्याः स्फुटम् ॥११ ॥
मुहुर्वलितकन्धरं वदनमीक्षमाणो हरे-
रुदारमुरलीरवश्रवणभङ्गशङ्काकुलः ।
पदार्पणविलम्बनं विदधदूधसो गौरवाद्,
व्रजन् सरणिसीमगं व्यतन सौरभेयीव्रजः ॥१२ ॥
विचित्रगतिविभ्रमैरभिभवन् किशोरद्विप,
सुहृद्गणविनोदवागविदिताध्वयानश्रम ।
गवाक्लनकैतवात् प्रतिपद विलम्ब्योर्जयन्,
विलोककुतूहलं हरिरवाप वृन्दावनम् ॥१३ ॥

१ नैचिकी श्रेष्ठा गौः।

क्वचिद्गिरिभिरुन्नता क्वचन गर्तगर्भैर्नता,
सिता विचकिलै:[१] क्वचित्, क्वचन किंशुकै र्लोहिता ।
हिता पशुततेस्तृणैः परमरण्यपृथ्वीलता
कुलैः कुसुमितैः स्मिता, भगवतो रतिं व्यातनोत् ॥१४ ॥
[२]रसाल-नवमञ्जरी-कवलनोल्लसन्मञ्जिम-
प्रवृत्तमृदुकाकलीकलकला: क्वचित्कोकिला: ।
निपीय मधु निर्भरं कुड़्वक-व्रजस्योन्मदं,
नदद्भिरलिभिः समं जगुरिवास्य शस्य यशः ॥१५ ॥
शिरोपकुसुमावलीसुरभिसारसम्भारभाग्
वनेऽविरलपादपैस्तुहिनितो घनच्छायया ।
श्रमाम्बुकणिका हरन्नुनु मनः समुल्लासयन्,
क्वचित् परिचचार तं परिजनायमानो मरुत् ॥१६ ॥
नवाम्बुधरघोरणी मृदुमृदङ्गमन्द्रध्वनिः,
शिखावलविलासिनीचतुरलासिकाताण्डवम् ।
मदप्रचलझिल्लिकारुदविगीतगीतं तथा,
निरन्तरमतूतुपत् क्वचन पूतनाविद्विषम् ॥१७ ॥
क्वचित्पशुपसुभ्रुवामधरबन्धवो बन्धुकाः,
कपोलतलकोमलद्युतिनिकारशूराः शराः ।
प्रवासिदयितेक्षणक्षणविकासिवक्त्रश्रियं,
श्रयन्ति नलिनानि च क्षणमिदम्मनोऽरञ्जयन् ॥१८ ॥
विलम्ब्य पथि नैचिकीनिचय अग्रतश्चारयन्,
सखीनखिलशाखिनः प्रसवशालिनो दर्शयन् ।
मृगद्विजसुखासिका-मदनिनादमाकर्णयं-
स्ततस्तरणिनन्दिनी पुलिनमाजगामाच्युतः ॥१९ ॥
समृद्धनयणीरूपे क्षितिभृतीव मध्येवियद्,
विवस्वति निरन्तरं प्रतपति प्रपन्नातृषम् ।
मुकुन्दमनपेक्ष्य ते ह्रदमुपेत्य गावोऽनुगा-
स्तदम्बु गरलाविलं सपदि पातुमारेभिरे ॥२० ॥

१. मल्लीभेदैः ।
२. इतश्चतुर्भिः क्रमेण वसन्ताद्यृतुचतुष्टय वर्णितम् ।

दयालुगुरुबोधनादिव गृहान् परिव्राजका,
दवानलविवर्तनादिव खगा कुलायद्रुमान् ।
तदा विषविदूषितारुणसुतापयः स्पर्शनाद्,
विमूढमनसोऽत्यजञ्झटिति तांस्तदीयासव ॥२१ ॥
विपन्नभरणव्रतोऽमृतदृशा, वपुश्शेषतां,
गताननुगतानिमानसुभिराशु संय्योज्य सः ।
तदादिमुदमद्वयामनुभवन्नत स्रोतसि,
प्रणम्य [१] सविधे जवादधिरुरोह नीपद्रुमम् ॥२२ ॥
स्वभावविनतस्तदा हरिमुदुह्य विश्वम्भर,
नमन्नतितरा परा मुदमुदञ्चयन्नाच्युतीम् ।
कदम्बविटपी स्फुरत्कुसुमकण्टकः सर्वतो,
हरिप्रियपद निजं ननु चिराय सार्थं दधौ ॥२३ ॥
स्फुटत्कुवलयामलच्छविरपास्तभीशृङ्खलः,
खलस्मयहरो हरिः परिकर निबध्योद्धुरः ।
विलोक्य यमुनाजलं विषमकालकूटाविल,
विलङ्घ्य विटप जवादनु पपात नीपादध ॥२४ ॥
अचिन्तितवकान्तकृत्पतनभीमवृत्तेक्षणा-
दवापातमरसम्भ्रमप्रचलदङ्गके संकते ।
विहस्तमतिभिस्तमः कवलितं गलच्चेतनं,
सुहृद्भिरिव तत्क्षणे पशुभिरप्यपाति क्षितौ ॥२५ ॥
चिरादुदितचेतनः प्रबलशोकशुष्यन्मुख, [२]
स्खलद्गतिरतिश्वसन् सजलदृग् विषीदन्मति ।
दिशो दश विलोकयन्नपि खिला किलापन्मयी-
र्विलीनमुदघद्विपस्तदनु तेषु कश्चित्सखा ॥२६ ॥
उपेत्य पशुपेश्वरां कथमपि व्रजे विक्लवां,
निजाकृतिविलोकनक्षुभितचेतसावद्गसा ।
ज्वलद्गरलकालियह्रदनिमज्जन चक्रिणो,
जगाद युगपद्भवत्कुलिशकोटिघातोपमम् ॥२७ ॥

१ आरोहणसमये वृक्षाधिष्ठात्री देवता प्रणम्यत इति समुदाचार ।
२ युग्मकम् ।

व्रजाधिपतिदम्पती परिजनैरशेषैः समं
निजैकतनुजन्मनः प्रलयमाविदन्तौ शिशोः ।
मुमूर्च्छतुरचेतनौ रुरुदतुः[1] पुरो धावतो-
र्विलेपतुरपप्तता तपनजातटे चापतुः ॥२८॥
जवादगणितापदो मिहिरनन्दिनीस्रोतसि,
प्रसह्य हरिजीविता नियतमन्वमङ्क्ष्यन्नमी ।
न वा यदि यवीयसः परिणतानुभावं विदन्,
परीक्षितबलः क्रमो दृढमवारयिष्यद्द्रुतः ॥२९॥
यदानुजशुचाऽऽतुरा निधनसन्निधानोद्धुरा,
गिरेर्गुरिह स्यात्तदपि नो यशोदादयः ।
विभोऽपि यदिहात्मजस्तदुपसर्गतो धीरतां
ताः प्रकृतिविह्वलाः कथमिवाश्रयेयुः स्त्रियः ॥३०॥
परन्तु गणशः क्षणाद् दृषदि चूर्णयन्त्यो मह
भवन्ति न मनीषिणाममृतसूक्तयो निष्फलाः ।
अतः सदुदितैः प्रियैर्मुरारिणा समाश्वासिताः
पुनर्हरिदिदृक्षया दधुरिमाः कथञ्चिद् धृतिम् ॥३१॥
विभो ! विकटदंष्ट्रकात्फणिमुखाद्रसच्युतं,
तदेकशरणं व्रजं सपदि योजय प्रेयसा ।
इदं विधुरचेतसोऽनुपधि याचमाना मुहुः
समेत्य पुलिनेऽस्थिताश्चिरमुपासतात्मेश्वरम् ॥३२॥
फुल्लाम्बरमणो नु किं प्रलयभास्करोत्पादितः
पुरन्दरकराच्च्युता किमुत सहसा ह्रादिनी ।
इति प्रचुरसंहरः पतति केशवे यादसां
मुदितसवितर्कितं चकितमान्तरं सुभ्रुवे ॥३३॥
चिरादुपगतं नु तं प्रियतमं कलिन्दात्मजा,
प्रकम्पशयशीर्षिभिर्दीर्घितदैन्यमालिङ्ग्य स्निग् ।
विलोलनलिनेक्षणस्रुतपयोऽश्रुसेकैः शनै-
र्भुजङ्गनखरार्पी कृति कलितरोदनातेदयत् ॥३४॥

१. समुच्चय ।

क्षुमा[१] कुसुमरोचिषं हरितनुं तटस्थाः स्फुरत्-
कलिन्दतनुजाजलात् किमितरामवेष्यंस्तदा ।
चलं कनकपिञ्जरं कटितटे निबद्धं पटं,
व्रजन्तमविलक्ष्यतां यदि न वाऽग्रहीष्यञ्जना ॥३५ ॥
तटे खलु सखीनलं विलपतोऽनपेक्ष्यामुना,
रयेण निजिघृक्षुणा विषधरं न्यमज्ज्यम्भसि ।
सिषाधयिषवो जवादसुकरं प्रसह्येहितं,
न जातु गणयन्ति यत् स्वजनविप्रयोगापदम् ॥३६ ॥
रसातलमिवापरं फणिमणिप्रकाशोज्ज्वलं,
समस्तजगदाहृतद्रविणसारभारैश्चितम् ।
परेतपतिपत्तनप्रतिभटं परैर्दुर्गमं,
गभीरमिह कालियह्रदमथाविशत् केशवः ॥३७ ॥
कदम्बशिखरादरं[२] प्लुतमरातिहत्सादरं,
रतीशशतसुन्दरं मुरहरं हसन्तन्दरम् ।
पुरो युवपुरन्दरं स्थितमवेक्ष्य दामोदरं,
भुजङ्गललनादरं जहुरलं व्यथुश्चादरम् ॥३८ ॥
कदम्बकुसुमायितास्तनुतमा वहन्त्यस्तनू-
रनूनकुचमण्डलप्रचुरभारभुग्नान्तराः ।
विलोचनकदम्बकं तृपितं[३]-मञ्जलीकृत्यता-
स्तदीयसुषमासुधामतिचिरं निरीहा पपुः ॥३९ ॥
अधृतकमलाऽमला सखिपयोधि-संवर्धिनी,
दिवाऽप्यमितवैभवा स्मितसुधासमुल्लासिनी ।
विधुन्तुदरदच्छदाकृतपिधाविधा[४] सुभ्रुवां,
स्वभूवदनकौमुदी व्यधित दृक्चकोरोत्सवम् ॥४० ॥
नमद्वदनमुन्नमत्कुचसरोजमञ्जत्करं,
भ्रमद् भ्रुकुटि- विस्फुटत्त्रिवलि-वेल्लमानाधरम् ।

१. क्षुमाऽतसी ।
२. शिखराद्-अरं शीघ्रम् । सादरनीति सादरस्तम् । दरमीषद् भयञ्च । यमकम् ।
३. तृषा मजाताऽस्य ।
४. व्यतिः ।

निमेषविधुरा हरिं क्षणमवेक्षमाणाऽऽदरा-
दनक्षरमवेदयन् किमपि कामवाम्यं परा ॥४१ ॥
परा च वरवर्णिनी सुमपरागगन्ध्यानना,
परागमनशङ्किताऽप्यहिपरार्ध्यशक्त्या स्थिरा ।
हृतामरपरामवे मुरहरेऽपरागीक्षणा,
कुतूहलपरायणा व्यरचयन् परान्तर्कणाम् ॥४२ ॥
प्रमाद्य गिरिश भृशं किमदधादनङ्गस्तनुं,
किमाययनुरेकतामसमतेप्सकार्याक्षिनां ।
अविन्दत पुरूरवाः किमयथाऽवतार पुन-
र्विचित्ररचनानिधेः किमु नवीनसृष्टि विधे. ॥४३ ॥
निरीक्ष्य पुरुवैभवं भुजगचक्रशक्रस्य तद्,
रमाऽद्वयविलासमार्गपि मनश्चमच्चक्रिवान् ।
ठयोद्भजडिमाऽद्भुताद्दृजुमिरेप योषाजनै-
रमान्युदितमाध्वसो विकटवैरिसाक्षात्कृते. ॥४४ ॥
तदीयरुचिचारिमप्रभवपक्षपातोत्कया,
कयाऽपि सहजत्रपाविवलितोन्नतग्रीवया ।
वयातु[१]-मभिधादिभिः सह विधेयमानन्तरं,
तरङ्गितदृशा शनैरभिदधे हसन्त्या हरिः ॥४५ ॥
भवन्तमभिधाय का सुकृतमेति वर्गावली,
चकास्ति विषयोऽप्यलं प्रथितकीर्तिमाश्रित्य कः ।
प्रसूय कतमोऽन्वयः[२] सुभगचक्रचूडामणिं,
शशाङ्कजननेन तं हसति विश्रुतं वारिधिम् ॥४६ ॥
अमेचकमुज्ज्वलच्छविभृतं भवन्तं गृहा-
दिहानयदमरायं सुकृतमेव नक्षत्रुषाम् ।
परन्तु वसुधाविधो ! किमु विधेयमेतादृशात्,
किशोर ! वन साहसादिति न बोद्धुमीशावयम् ॥४७ ॥

१. भ्रातृन् ।
२. पर्यायोक्त-निदर्शने ।

अपासयति[१] चेतनानुपरि जङ्गमानाशु य-
द्वलाहलमहानलप्रबलकीलजालं ज्वलत् ।
कृतान्तमभिमानिना महिमहेन्द्रमेकाकिन-
स्तमेनमभियास्यतो न भवतोऽप्यभूत् किं भयम् ॥४८ ॥
प्रसूः किमु न वत्सला, न च पिता हितावेक्षको,
न वा प्रणयमेदुराः सदुपदेशका बन्धवः ।
यदेभिरनिवारितस्त्वमतिवर्ण्य- लावण्यभू-
रभूरिह वृथाऽन्तकृद्विषमवक्रगर्ते गतः ॥४९ ॥
अयि ! द्रविणमर्जितु ननु कदर्थितो ज्ञातिभि,
फणामणिजिहीर्षयाऽगणितसाहसिक्योऽद्वय ।
दुरासदमिदं भवानहिनिकेतमप्यागम-
न्नकारयति केन किं प्रकृतिकर्कशा दुर्दशा ॥५० ॥
सरीसृपकुलक्षयव्यसनितार्क्ष्यदर्पोल्लुठ-
द्बठाक्रमणमोघनप्रथितविक्रमो न पतिः ।
न मृष्यति परस्थितिं क्वचन विप्रकर्षेऽप्यसा-
वहर्युगणकेतनं निजनिकेतने[२] किं पुनः ॥५१ ॥
स यावदुरगेश्वरस्तददरिद्रनिद्राकला-
वशीकृतमना मनाक्त्यजति तां न चण्डः स्वयम् ।
निरस्तनिमिषक्रिया सफलयन् दृशो नः श्रिया,
श्रवासि वचनामृतं शुभग ! सिञ्च तावत्क्षणम् ॥५२ ॥
इदं यदपि सुन्दर ! प्रणयशून्यमामन्त्रणं,
तथापि[३] कथयत्यहो भवति पक्षपातोऽत्र नः ।
निजः सहजकोपनादहिभृतोऽथ गोपायितु
प्रसज्जयतु हृत्सु नो विरहवेदनावेदनाम् ॥५३ ॥
भुजङ्गरमणीजनैरभिहितः सलील क्षणा-
दुवाच रुचिरं वशी प्रणयवागतिप्रीणिनः ।
सुधामधुरिमाचितं मृदुवचः कुरङ्गीदृशा,

१ अपगतामून् करोति ।
२. अर्थाः ।
३ कथयतेर्णिच् ।

वितीर्णबहुकौतुकं न खलु कौतुकं नन्दयेत् ॥५४ ॥
अयि ! व्रजपुरन्दर· पशुपवंशमुक्तामणि-
र्वनीयकसुरद्रुमो जनयिताऽस्ति नन्दः कृती ।
अनन्यतनुजा भृशप्रचितवत्सलिम्नो निधि,
सतोकुलयशोगति र्मम यशोमती तु प्रसू ॥५५ ॥
मदेकहृदया· सदाहितनिदर्शका वान्धवा-
स्तनुद्युतिनिबन्धन लसति नाम कृष्णेति मे ।
न काञ्चनरुचि र्मनागपि तु काञ्चन क्ष्वेलिकां
विधातुमनसा मया भुजगराजवेश्मागतम् ॥५६ ॥
निशाम्य गरुडातिग वहुफण करालाशिप,
हलाहलमहाबल कुटिलकालदण्डोपमम् ।
अजाङ्गुलिकगोचरं पयसि यामुने कालियं,
शिशु सहजकौतुकादुपगतोऽस्मि त वीक्षितुम् ॥५७ ॥
अवेत्य वकवैरिण प्रतिवचोऽस्तभीकं तथा,
कथापटिममोहिता· प्रसृतपक्षपातास्ततः ।
विरेमुरहिवल्लभा न पुनरस्य संवारणा-
दकृत्रिमदयालुता भवति योपितां प्रायश ॥५८ ॥
परा भुजगभामिनी भ्रुकुटिमादधाना पुन,
स्वकीयनयपाटवं प्रकटयन्त्यकूटाशया ।
प्रगल्भहरिगीस्ततालपनकौतुका तं तत,
प्रवीणपरिवादिनी क्वणितमञ्जुलं व्याहरत् ॥५९ ॥
रणेषु भटविक्रमा-ननवलोक्य, शस्त्राहती-
रतीतगणना मृतिप्रतिभुवोऽविपह्यासकृत् ।
किमिच्छसि निरीक्षितुं मनुजपोत ! सर्पाधिपं,
जवादवलचेतनां हरति भीमसाक्षात्कृति· ॥६० ॥
इदं क्व मदनार्बुदप्रमदमर्दिसौन्दर्यभा-
गपि श्रमलवाद्दलत्कमलकोमलं ते वपुः ।
क्व वा प्रखरसङ्गरक्षपितताक्ष्र्यपक्षोरग-
प्रभुं प्रति दुरायतिर्द्रुतमय वताभिक्रम·[1] ॥६१ ॥

१. रणेऽभीतस्य रिपुं प्रति गमनम् ।

प्रसीद विदधेऽञ्जलिं स्मर कुटुम्वमापद्गत,
जहीहि गहनं ग्रह वज्र गृहं गृहीत्वा धनम् ।
विदन्ति ननु वल्लवाः पशुविवन्धनं केवलं,
भटैरपि च दुर्घटा न पुनराहवप्रक्रियाम् ॥६२ ॥
अभीष्टफणिनिग्रहो जलदनादगम्भीरया
रयादथ गिरोत्तर स्मितपरिष्कृतास्यो ददत् ।
अजिग्लपदपावृतः[१] कलहशङ्कया मानस,
प्रसूनदलकोमलं तदवलाजनस्याच्युत ॥६३ ॥
इमा क्व ? गिरिसन्निभाः शितरदा मदान्दोलिता,
क्व चातिलघुविग्रहस्तदवसादकः केसरी ।
तदेतदहियोधने त्यजत सम्भ्रम सुभ्रुव,
प्रभावमुपजीवति स्फुटमये न कार्यं जय ॥६४ ॥
अयं न मदनाहवो यदिह योधिना भीरवो !
बलावलविवेचना भवदधीनभावं भजेत् ।
प्रबोधनविलम्बन भुजगपुङ्गवस्याधुना,
पराक्रमयशोविधु विधुरित विदध्याद्ध्रुवम् ॥६५ ॥
अनारत-रतश्रमस्फुरितसान्द्रसम्मोहजा,
विषोष्मपरिपोषिता मधुमदेन मेदस्विनीम् ।
स्थिरामनुभवंश्चिरादभिमत सुषुप्ति तत
प्रियाभिरभिबोधितः सजदुरोजमाश्लिष्य सः ॥६६ ॥
कुसुम्भसदृशौ दृशौ सरभस समुन्मीलयन्,
निभाल्य मनुजार्भकं विभयमन्तिकस्थं वशी ।
तदप्रतिमसाहसादतनु विस्मितोऽवज्ञया,
दधौ धृतिमुष रुषं फणभृदग्रिय कालिय ॥६७ ॥
विभीषयितुमच्युतं बहुनदाद दग्धुं मुहु-
र्मुमोच विषफूत्कृती लयकृशानुकीलप्रभा ।
फणं रुपलकर्कशैर्दृढमनेकधाऽताडयद्,
ववन्ध वपुषाऽगस्तमदशच्च तीक्ष्णाशिषा ॥६८ ॥

१ म्लानत्व ।

खगेशमिव पन्नगो, हरिमिव द्विपस्तारको
विशाखमिव, रावणो जनकजात्मनाथं यथा ।
विलोचनमिवान्धको, हरिहयं यथा वा बलः,
शशाक जलशायिनं न किल बाधितुं कालियः ॥६९ ॥
तदीयमखिलं बलं विफलयन् स्थितः स्थाणुवत्,
प्रसह्य नमयञ्छिरो गजपतेरिवाश्रोरणः ।
रयोत्प्लुतिविचक्षणः, प्रहरणं विनाऽप्येकलो,
विलेशयकुलेशितुः शिखरमारुरोहाच्युतः ॥७० ॥
विलोलवनमालिकः ललितबाहुविक्षेपणः,
ननासमुदितांशुकः, ध्वजपटायमानांशुकम् ।
विभूषणलसन्मणिक्वणितदत्ततालं क्षणं,
फणासु भुजगप्रभो र्नटनमादधे माधवः ॥७१ ॥
धरामिव पृथुः पुरा कुलिशजिष्णुना धन्वना,
स्वपाणियुगलेन स प्रसभमुच्छ्रिना चूर्णयन् ।
कलावलयपण्डितः प्रतिधर्मण्डितम्ताण्डव-
क्रमेण विषमा समामहिफटावली चक्रिवान् ॥७२ ॥
विलेशयशिखाज्वलद्विमलपद्मरागत्विषां
चयेन परिचुम्बिते प्रकृतिकन्दली[1]-लोहिते ।
पदे मुरभिदो नखद्युतिजितस्फुरत्केसरे,
न कोकनदयोर्भ्रमं जनयतां कथं पश्यतः ॥७३ ॥
हरिं गरुडशात्रवः श्रवणयुग्मिनं कुण्डली,
भुजङ्गविभराग्रणीरधिपरस्ति षण्डः सदा ।
अहिः शतमखाद्विपत्रपिशुनो द्विजिह्वो जहौ,
महौषधिवशादिवाच्युतपदोपमर्दाद् विषम् ॥७४ ॥
समस्तजगतां भरं कलयता नृशंसद्विषा,
रुषा विदलितो दृढं शिरसि दन्दशूको मुहुः ।
निरस्तविषवैभवो विगलितोग्रवीर्यः स्वयं,
ममोह, न महीयसः प्रहरणं सहेतावरः ॥७५ ॥

1 रक्तोत्पलविशेषः ।

जनार्दनपदार्दनाद्दलितमर्मगात्रं, मुखै-
र्वमन्तमतिशोणित विधुरमीक्षमाणा धवम् ।
उपायमपर कमप्यनुपलभ्य तन्मोचने,
फणिप्रवरवल्लभा- शरणमस्तुवन् माधवम् ॥७६ ॥
प्रभो ! सपदि पाहि नो, वितर जीवनं किङ्करी-
गणे कुरु दयामये ! विसृज मृढमस्मत्पतिम् ।
अलौकिकनरस्वितां क्व भगवान् वहन्नद्वय-,
क्व चायमतिदुर्गति- कृपणकीटकल्प फणी ॥७७ ॥
त्वया समदृशा हित कलयताऽप्यहो देहिना-
मथ विषधरान्वये सहजदारुणे दत्तमू ।
प्रभो ! विकटमप्यदस्तदनुसारमेवाचर-
न्निहोचितविवेचकः किमिति दोषभाक् कथ्यताम् ॥७८ ॥
यदीयपद-पूजनादपि रिपून्निहत्यान्तरान्,
सुखेन विजितेन्द्रिया निभृतमासते साधव ।
स्वय स भगवान् पुनर्यदि भवान् रुष स्यादृश-
स्तदा प्रवितना तथा शमकथा वृथा सर्वथा ॥७९ ॥
असावपि नवाम्बुदद्युतिरनिष्फलाशी,हरि ,
कलिन्दतनयाप्रियो, विपुलभोगभाक् कुण्डली ।
परश्वसनचक्रभृद् रुचिरकञ्चुकस्त्वत्सख
किमर्हति निबर्हणं कलयितुं त्वदेवेदृशम् ॥८० ॥
स्वकुक्षिकुहरे रे ! क्षिपसि विश्वमेव क्षये,
तदेप नृहरे[1] हरे रभिभवोऽस्य नात्यद्भुत ।
पर पुरहरे[2] हरे[3] वहति वहिमान तम-
स्त्वयि व्रजहरे ![4] हरेणुसुमभासि[5] सत्त्व पुन ॥८१ ॥
वदन्ति यनिजाजने भगवत कृपा भूयसी,
प्रतीपनरमीक्ष्यते परमिद प्रभो ! साम्प्रतम् ।

१. मपम्य ।
२ पुरनाशक ।
३. शिवे ।
४ व्रजचन्द्र ।
५ हरेणुसुम कलायविशेषस्य कृष्णवर्णपुष्पम् ।

महामहिमगीतमप्रणयिनीविपन्मोचनं
मनागपि दयानिधे ! स्मरसि नेति मन्यामहे ॥८२ ॥
अहीन्द्रमहिलोदितं सकरुणं समाकर्णयं-
स्तदुद्धतनिपीडनादनुपदं निवृत्याच्युत ।
न केवलमदर्शयत् सदवतामपि त्वोजसा
पराजितपरावनं भटयशोनिदानं नयम् ॥८३ ॥
करीव सृणिविक्षतं शिरसि कृष्णपादाम्बुज-
प्रहारमुपलभ्य स स्फुरिततत्त्वदृक् कालिय ।
प्रशान्तकरणः शनैं विगतसाध्वसः प्रीतिमान्,
प्रबन्धुमुपचक्रमे विमलतत्प्रशस्तिस्रजम् ॥८४ ॥
विपज्जलधिनाविकस्त्वमसि विश्रुतस्तत्कथं,
न तारयसि मां पुनर्व्यसनपूरमग्नं विभो !
अये ! किमिति न स्मरस्यहह ! दीनरक्षाव्रत,
जुगोपिथ यदातुरं कपिवरं पुरा वालिनः ॥८५ ॥
निधित्सुरसि या चिरादभिनयन् महस्सु कृती,
कृतीश्वर ! विकत्वरामपि दयालुकीर्तिं वहन् ।
तनीयसि मदागसि प्रददतस्तु दण्डं दृढं,
कृपाकृपणताऽसकौ भगवतो ध्रुवं प्राकटीत् ॥८६ ॥
क्रुधं त्यज दयानिधे ! कुरु कृपां विधेये मयि,
त्वमेधि शरणं हरे ! मम खगाधिपाद्बिभ्यतः ।
इयत्र खलु वेत्ति को भुवनमण्डलाधीश ! यत्
तरस्व्यपि न दुर्बलं प्रभुपदाश्रितं बाधते ॥८७ ॥
न चाम्बुधर सुन्दरश्शमितभर्म[१] शर्माम्बरः,
शिखण्डकृतमण्डनः शमनयातनाखण्डनः ।
सरोरुहममेक्षणः क्षपितदेववैरिक्षणः,
सदा मनसि बालकः स्फुरतु कोऽपि गोपालकः ॥८८ ॥
प्रबोधविधुबाधितस्मयतमस्तो भाषितं,
निशम्य फणभृत्पतेरतिननन्द नन्दात्मजः ।

१. भर्म सुवर्णम् ।

सहेत मृदुल मितं सुरभि सूनृतं व्याहृतं,
सुधामधुरिमाधरीकृतिधुरां दधाति ध्रुवम् ॥८९ ॥
विसृज्य यमुनामये ! रमणक व्रजद्वीपकं,
मदङ्घ्रियुगचिह्नितो वस गरुत्मतोऽप्यत्रसन् ।
इति प्रमितमादिशन्नुचितमायतिक्षेमकृत्,
सलीलमहि-मस्तकादघनिषूदनोऽवातरत् ॥९० ॥
ततोऽहि-महिलाजनै मृदुदुकूलमुक्तावली-
समर्पणपुरस्सराऽक्रियत चारुनीराजना ।
प्रणम्य परित स्थितै. प्रणयवासनोल्लासितै-
रगीयत तथा हरे विजितपूर्णचन्द्रं यश· ॥९१ ॥
तासामकैतवा प्रीति स्तुतिश्च हरिणीदृशाम् ।[1]
अरञ्जयत्तरां सद्यो नन्दनन्दनमानसम् ॥९२ ॥
श्रीकृष्णचरणाम्भोजद्वन्द्वचिह्नमनिह्नुतम् ।
अहाय शिरसाऽऽदाय कालिन्दीं कालियोऽजहात् ॥९३ ॥
न जहर्ष तथा मानी भगवद्धारनिर्गमात् ।
यथा नैसर्गिकाराति-गरुडत्रासनाशनात् ॥९४ ॥
नाथे पुरो रमणक त्वरित प्रयाति,
प्रस्थानमेव कथमप्यथ कल्पयन्त्य ।
श्रीमन्मुकुन्दमुखचन्द्रसुधानिमग्ना,
शेकुः कुशेशयदृशो न दृशोऽपनेतुम् ॥९५ ॥
भुजङ्गाङ्गना·[2] स्वामिना नीयमाना,
समस्ता विहस्ता पुरस्ताद्भवन्त्य ।
मनोरत्नमप्रत्नमव्यक्तयत्न,
यशोदा-यशोदायकायोपजह्रु ॥९६ ॥
याध पर्थनावितथाभिसन्धि, प्रस्थाप्य वैरिक्रथनोऽहिनाथम् ।
कलिन्दशैलेन्द्र-सुतामयन्द-, मानन्दयन्नन्दकुलार्णवेन्दु· ॥९७ ॥
विभ्रन्मालामुरुमणिमयीं प्रेषिते पन्नगेशे,
पीयूषाभाद्गलितगरलाद् यामुनादम्बुपूरान् ।

१ इत श्लोकत्रयेऽनुष्टुप् छन्द ।
२ भुजङ्गप्रयातच्छन्द· ।

निस्सृत्यासौ सपदि पुलिने वन्दमानश्च पूज्या-<br>
नाशीराशीर्नधिकवयसामाश्नुतानन्दकन्दः ॥९८ ॥<br>
पृष्टः सद्यः पयसि विहिता वर्णयंश्चित्रलीलां,<br>
पित्रोर्भ्रातुर्निखिलसुहृदां गोपिकानां च चेतः ।<br>
आश्चर्याब्धौ तरदतितरां कल्पयन्निर्विकल्पः,<br>
साकं सर्वैर्व्रजमनुययौ कौतुकी कृष्णचन्द्रः ॥९९ ॥<br>
अथ 'मायादेवी'-सुकृतिपटली-मौलिमहित-<br>
प्रधी-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचितः ।<br>
अभूत्पूर्णः सर्गः सपदि दशमः 'काश्यपकुल-[1]<br>
प्रशस्तेः' सोदर्ये कुतुककृति राधापरिणये ॥१०० ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के कालियनिग्रहो नाम दशमः सर्गः ॥*

१. काश्यपकुलप्रशस्ति स्वतंत्रवंशवर्णनात्मकं काव्यम् ।

*॥ इति प्रभाया दशमः सर्गः ॥*

# अथ 'आभीरीचीरापहारो' नाम
## एकादशः सर्गः

अथान्वह केशवसेवनेन[1] स्वभूतिसाफल्यमिवाप्तुकाम ।
व्रज समन्तादवियुक्तकान्तौ हेमन्तनामर्तुरलञ्चकार ॥१ ॥
दैवेऽनुकूले चिरविप्रयोगादनन्तरं कान्त-समागतानाम् ।
प्रेयानभूदेष विलासिनीनामायामियामक्षणदाप्रदायी ॥२ ॥
असावसीमप्रणयाञ्चितानाममन्दकन्दर्प-वशंवदानाम् ।
औत्सुक्यविज्ञो व्रजवासियूना दिनानि नून प्रतनूचकार ॥३ ॥
पिशङ्गशालिव्रजशालिवासा विकासिकुन्द-प्रतिभासिहासा ।
श्रीकृष्णविश्लेष ममर्षयन्ती हेमन्तलक्ष्मीं र्न जहौ व्रजान्तम् ॥४ ॥
निर्वापको वारवियोगवह्नेः प्रवर्तको दीर्घरतोत्सवस्य ।
हैमन्तिको गोपनितम्बिनीनामपि प्रदोष प्रगुणो वभूव ॥५ ॥
सप्रेमपीयूष-मयूखसिक्तास्तुषारपृक्तानिलशीतलास्ता ।
*अपि त्रियामा किमनन्तयामा, न तापयामासुरहो वियुक्त ॥६ ॥*
वियोगिनीनां व्रजसुन्दरीणामरुन्तुदा कल्पविशालकाया ।
व्याञ्जन्स्वनाम्न क्षणादा प्रवृत्ति[2] ददातिना न घतिर्नैव नूनम् ॥७ ॥
तुदन्तु साध्वीरवला वियुक्ता,स्तमोऽतिरेकान्मलिना रजन्य ।
*हाहन्त ! किन्तु द्विजराजयोगात्, क्लिश्नन्ति किन्ता शुचयोऽपि तावत् ॥८ ॥*
लघ्वीषु पूर्वासु निशीथिनीषु, यच्चित्रकेलिर्न गतोऽवसानम् ।
सम्भूय कान्तैस्तरुणैस्तदानी, श्यामाभिरुल्लास्य समापितोऽसौ ॥९ ॥
क्रमेण यूना सुरतस्पृहाभि, सम समापु पृथुता त्रियामा ।
क्षयन्ति पद्मानि तुषारसङ्गा[3]-दुष्णाशुताप च विना न रेजु ॥१० ॥
स्थाने युवभ्यश्चिरकेलिकाल, विश्राणयन्त्यो नितरां रजन्य ।
आसादयामासुरिहाशुवृद्धि, सद्य प्रसूते हि सुकृत्यमिष्टम् ॥११ ॥
कान्ताकुचोष्मव्यपनीतशीत, प्रकामकामप्रधना[4]-स्तनिद्र ।
यूनामनूनामजहात्स्मृति नो, हेमन्तिक, शातमय प्रभात ॥१२ ॥

१ इतआरभ्य १०० श्लोक यावदुपजातिच्छन्द ।
२. उत्सव-खण्डिका, न तूत्सवदायिनीतिभाव ।
३. महोक्ति-विनोर्ना ।
४ कामप्रधन रतम् ।

अतीवतीव्रतरैः करैर्यः प्रौढप्रतापस्तपनस्तपेऽस्यान् ।
सोऽग्राप तापाधिकदुर्विधत्वं, सदा स्थितिः कस्य समानरूपा ॥१३॥
पूर्वाभिरामाऽपि शरद्ग्रहे या, सरोजराजी नितरामराजत् ।
अभूद्विलीना हिमसङ्गमे सा, नात्युन्नतिः कस्य निपातहेतुः ॥१४॥
तुषारभानो विपदि प्रसन्ना, राजीवराजीतिरुपा तुषारः ।
किमार्दयत्ता पद्मिना हि नूनं, विधीयते स्वीयसपत्नशुद्धिः ॥१५॥
अवाप कुन्दं तुहिनाद्विकासं पद्म पुनर्दैववशेन नाशम्[1] ॥
चन्द्राच्चकोरः सुखमेत्यशोकं, कोकस्तु कान्ताविरहेण शोकम् ॥१६॥
वृन्दानि हित्वा कुसुमान्तराणि, हिमं मृदून्यद्भुतमार भाणि ।
अजातयत्केवलमम्बुजानि, क्रूरस्य सत्स्वेव हि सम्प्रहारः[2] ॥१७॥
गज़ो दधानः प्रतिकूलभावमशक्नुवन्मित्रनिरीक्ष्यमाणः ।
कर्णीशकेतोरिव सिन्धुराजः, कञ्जव्रजो वारिभियेव मग्नः ॥१८॥
पुष्पायुधाद्रक्षितुमक्षमाणि, किं वाऽबला कान्तवियोगदूना ।
सरोजिनीना सुमनांसि खेदाद्दूरयतामत्र कृशान्यगच्छन् ॥१९॥
निशम्य गोविन्दगुणानजस्रं, व्रजे कुमार्यो जनितानुरागाः ।
आराध्य तद्दास्यमहाप्यगम्याः, मन्ता सर्वामर्च्चितुमावकाङ्क्षुः ॥२०॥
सतत्फलं धेनुरवर्गुरूणामाशीर्गिरा मान्तलिकश्च गीतैः ।
अन्वर्थयामामुषिमास्त्रियामा-नामान्त्ययामाशुकृतप्रबोधाः ॥२१॥
अगाहमाना पृथगेकमर्थं, सम्भूय सर्वाः सहसा सखीभिः ।
कलिन्दकन्यापुलिनं प्रयान्त्यः, स्वरं विपञ्चीमधुरैरगायन् ॥२२॥
निशम्य तत्कर्णरसायनं स्वरं, वशीबभूवुर्वशिनोऽपि तासाम् ।
निसर्गमञ्जूक्तिमनुत्तमाना, रागानुगं किं पुनरत्र गीतम् ॥२३॥
कलं विकूजद्भिरलं प्रभाते, जाग्रद्विहङ्गैरभिनन्द्यमानाः ।
इत्थं कियन्तीव पदानि गत्वा, वृन्दावनान्ते यमुनामविन्दन् ॥२४॥
मञ्जीरपुञ्जान्मधुरध्वनीनां, वंशस्थमध्येतुमिवोपसन्नान् ।
स्थितान् सिताम्भोरुहकैतवेन, हंसान् सवात्सल्यममूरपश्यन् ॥२५॥
कलिन्दजाम्भोनसि कोमलाङ्ग्यः, कृताभिषेका मरुतः सुधीमान् ।
रोमाञ्चमौत्कारत्रिमारिकम्प-स्तम्भानशिक्षन्त विशिष्य बालाः ॥२६॥

१. प्रतिक० ।
२. अर्थान्तरन्यासः ।

श्रद्धैव लोके फलदेतिलोकान्, प्रत्याययन्त्यो ननु गोपकन्याः ।
अपूजयन् कृष्णविलासतृष्णा, मृत्स्नामयीमेव विधाय गौरीम् ॥२७ ॥
आदावनादिस्थितये वितेरू[१] रत्नासन शैलभुवे कुमार्य ।
मनागमुद्राञ्जलिमुद्रयाऽथो, प्राकल्पयन् स्वागतमप्यमुष्या ॥२८ ॥
यवप्रसूनाक्षतगन्धसार-कुशाग्रसिद्धार्थतिलै प्रणीतम् ।
अनर्घ्यमर्घ्यं वकवैरिदास्यमाशस्य मूर्ध्नि प्रददुः शिवायै ॥२९ ॥
श्यामाकदूर्वागिरिकर्णिकाब्जै, सम्पाद्य पाद्य कलधौतपात्रे ।
पदाम्बुजक्षालनमीहमानास्तस्यै चिर ता- प्रणता वितेरुः ॥३० ॥
लवङ्गकङ्कोलकजातिमिश्र, श्रेयोरसादाचमनीयतोयम् ।
आस्ये त्रिरस्यै सुदृशोऽच्युताप्त्यै, समार्पयन्नत्र समा. समानम् ॥३१ ॥
सितादधिक्षौद्रघृताम्बुयोगात्, पात्रद्वये कास्यमये प्रणीतम् ।
मुखे भवान्यै मधुपर्कमेता, मुकुन्दसम्पर्कमनीषयाऽदु ॥३२ ॥
रक्तोत्पलेभ्यो यदि दुग्धमिन्दौ, स्यन्देत, साम्य कलयेत्तदानीम् ।
समर्प्यमाण शुचि तत्करेभ्यो, देव्या मुखेऽन्वाचमनीयमम्भ ॥३३ ॥
ततो घृताद्यैरभिषिच्य चण्डीमुद्वर्त्य गोधूमसुगन्धिचूर्णै ।
करेण वो मामिव तीर्थवारा, कोष्णाम्भसा चास्नपयन् किशोर्यः ॥३४ ॥
सकञ्चुकं कञ्चुकलब्धनर्घ्यं कौसुम्भराग भपरोपगूढम् ।
विचित्रचण्डातकमण्डित ता, कौशेयवासो व्यतरन्नमुष्यै ॥३५ ॥
मञ्जीरकाञ्चीवलयार्धहारै, ग्रैवेयकैर्णोज्ज्वलकर्णिकाभ्याम् ।
किरीटसारेण च ता प्रयत्नात्, क्रमादलञ्चक्रुरल भवानीम् ॥३६ ॥
मन्देन्दुभाजा सह चन्दनेन, सिन्दूरमिन्दीवरनिन्दिनेत्रा ।
सम्मार्ग्यसौभाग्यसमृद्धिदात्र्यै, न्यवेदयन् वल्लववामवाला ॥३७ ॥
चिर तनुत्रानवलिप्सया ऽस्या, स्तोताऽलिनीगुञ्जितकैतवेन ।
वरत्रिवोत्कश्ररणोपचार, ताभिर्विनीर्ण कुसुमव्रजोऽभात् ॥३८ ॥
सर्पिस्फुरद् दुग्गुलुधूपधूप, कपोतकण्ठद्युतिमादधान ।
आमोदयामास भृश समन्तान्निवेदित शैलभुवे तथाऽभि ॥३९ ॥
नुदस्तमो मञ्जुदशः पदार्थान् प्रकाशयन्नाज्यसमृद्धकाय ।
हरन् रुच चम्पककोरकस्य, दीप कृतीवाञ्छददो विसृष्टः ॥४० ॥

१ इत स्वागताद्या षोडशोपचारा वर्णिता ।

चतुर्विधं सौरभचारु तस्यै, निवेद्य नैवेद्यमवेद्यकृत्यै ।
बाला सुभक्तिप्रवणाः शिरःस्थैः कराम्बुजैः कोरकितैः प्रणेमुः ॥४१ ॥
अहो ! प्रणामाञ्जलिकैतवेन, प्ररूढभक्त्या पदयोः शिवायाः ।
बालास्तदाम्भोरुहकुड्मलानां[1] समर्पणादप्युपसेदुरिष्टम् ॥४२ ॥
ततस्तदीय त्रिपुलानुभावं, विभाव्य तद्वर्णनलोलुपाभिः ।
ताभिः स्वकामावसरं कलाभात्तुष्टाभिरिष्टा परितुष्टुवेऽम्बा ॥४३ ॥
सनातने साक्षिणि पुंसि विज्ञा, त्वमेव मातः वितनोषि विश्वम् ।
वर्षीयसि स्वापिनि वीक्षमाणे, सतीव पत्नी निजगेहकृत्यम् ॥४४ ॥
समाहिता रक्षसि देवि ! लोकान् गिरीशभार्याऽपि गिरीशपुत्री ।
भक्ताभिलाषाप्युपितं निमेषाद्योषा शिवस्यापि शिव प्रसूषे ॥४५ ॥
सदा स्थिता स्थाणुमनु श्मशाने स्थाने शिवाऽसि त्वमगेन्द्रकन्ये ।
इदं पुनश्चित्रमये ! यदेतत्, त्वद्दर्शनं मङ्गलमेव दत्ते ॥४६ ॥
अतोऽपि का नाम परा महेशि ! त्वदीयसौभाग्यभरस्तुतिः स्यात् ।
पतिं यतीनामपि मन्मथारिं, हृत्वाऽर्धतादात्म्यमिदं यदापः ॥४७ ॥
उपासकैरुल्लसितात्मबोधैः, बुधैः स्तुताया विविधैर्वचोभिः ।
अकैतवं बालवनेचरीणां, नमः परं ते मुदमम्ब ! कुर्यात् ॥४८ ॥
पतिव्रताव्रातगुरुं वधूनां, विभूषणं जीवनमीश्वरस्य ।
विधिः शिवानामसि या त्वमेका, तां सन्ततं देवि ! वयं नमामः ॥४९ ॥
उन्मज्ज्य लज्जाजलधेः कथञ्चित्, पञ्चासुगप्रत्तकरावलम्बाः ।
उपाक्रमन्तेऽस्य तनोऽभिधानं गोप्यं परं गोप्यमपि स्वकामम् ॥५० ॥
अलभ्यकान्तार्थमपोवयत्नः, तपः क्लमं वेत्ति न देवताऽन्या ।
उपागताः स्मः श्रयितुं शरण्यां, त्वामेव तद्भूमिधरेन्द्रकन्ये ! ॥५१ ॥
अस्मादृशां ते गिरिदेवतानां, शृण्वन्तु देवाः कथमर्थनां वा ।
तदाशुतोषार्धवपुस्स्वरूपे !, कारुण्यसिन्धो ! गिरिजे ! गतिस्त्वम् ॥५२ ॥
उत्पाद्य सारूप्यमवेद्यभेदमाच्छादितं स्वर्गचिकित्सकाभ्याम् ।
कृपालवेनैव तवाम्ब ! धन्या, पतिं प्रपेदे च्यवनं सुकन्या ॥५३ ॥
पराध्यंदीकृत जगन्ति मातः, स्थिता त्वमेका ननु ते कृपातः ।
द्रागत्र चेन्मञ्जुकटाक्षपातस्तन्नोऽभिलाषः फलितां प्रयातः ॥५४ ॥

१. कलिकाऽर्पणमन्यत्र निगदम् ।

जागर्ति यादृग् जगदीश्वरस्य, प्रेमप्रवेकस्त्वयि देवि ! नित्यम् ।
तदंशतोऽपि व्रजराजसूनु, दासी- कृतार्थीकुरुतामिहास्मान् ॥५५ ॥
सुराङ्गनाभि स्पृहणीयरूपं, ग्राम्याः कथ नाम लभामहे तम् ।
एव विदन्त्योऽपि न शक्नुमस्त न्मग्नानि चेतांसि चिरेण हर्तुम् ॥५६ ॥
तदा फल किं हतजीवितेन, स चेन्न पाणीन् परिपीड़येन्न ।
रुष्टे विधाविष्टपतेरलाभात्, कुलाबलानां निधनं गरीय ॥५७ ॥
कृपाकटाक्षे पतति त्वदीये, धाताऽपि नैव प्रतिबन्धुमीष्टे ।
स किंपुन साधकता न यायादभीष्टसिद्धौ पशुपात्मजो नः ॥५८ ॥
भवानि ! भव्यानि जगत्त्रयस्य, त्वदेकतन्त्राणि विदो वदन्ति ।
प्रसद्य सद्यः कुरु तत्त्वमस्मान्, दयादृगन्तार्पणलब्धलक्ष्याः ॥५९ ॥
तदम्ब ! किं नाम विलम्ब्य पुष्य- त्तारुण्यकारुण्यसुधापयोधे ! ।
मुकुन्ददास्यापनसंविदुक्ति-[१] स्वातीजलं जीवय चातकीनं ॥६० ॥
श्रीकृष्णचन्द्रं पतिमीहमाना, भक्तेष्टदानें सुरभिं भवानीम् ।
एभि स्तवान्तै प्रणयेन शश्वदुपाचरन् षोडशभि. प्रकारैः ॥६१ ॥
एव प्रभातेऽन्वहमेव तासु, भक्त्याऽऽचरन्तीषु शिवासपर्याम् ।
कदाचिदायाज्जगदन्तरात्मा, स्वयं यशोदातनय प्रसन्न ॥६२ ॥
एकत्र चीराणि निधाय तीरे, नीरे कुमारी- स निमज्जतीस्ता ।
जनिक्षितीक्षाकुतुकेन मध्ये-पयोधि मेनेऽप्सरसो विशन्ती- ॥६३ ॥
बालाजने दीव्यति मन्मथेऽपि, त्रपैव केलिव्यवधा विधात्री ।
इत्यध्यवस्यन्नु जहार कृष्णस्तत्पालनामूलदुकूलजालम् ॥६४ ॥
भुजङ्गनिर्मोकमद प्रदिम्ना, नुदन्ति चित्राणि जवादुपेन्द्रः ।
कौशेयवासांस्यपहत्य तासामथारुरोहाविदित कदम्बम् ॥६५ ॥
दुकूलजालेन सम समासा, चेतोमणीनामपहारक तम् ।
स्थित निलीयाधिकदम्बशाखं, विज्ञाय ता दृष्टिशरैरविध्यन् ॥६६ ॥
सौवीर-[२] लेखामधुपावलिज्य, भुवौ मनोजस्य धनुर्नताङ्ग्य ।
दृगर्धशल्येन सनाथयित्वा, जघ्नुस्तरामंशुकतस्कर तम् ॥६७ ॥
तदक्षिकोणक्षतिभिन्नमर्मा, नूनं स चैतन्यमपाकरिष्यत् ।
प्रेमानुरोधादनुकम्प्य मुग्धा, स्मितामृतैस्ता यदि नाभ्यषेक्ष्यन् ॥६८ ॥

१. संविद प्रतिज्ञाया उक्ति ।
२. सौवीर स्रोतोऽञ्जन, सुर्मेति ख्यानम् ।

प्राप्ते स्वयं प्रेयसि दुर्लभेऽस्मिन्, हृष्टास्तदाभाषणलिप्सवोऽपि ।
जहुर्न वाम्यं वचसा पुनस्ता, बाला निसर्गेण हि वामलीला· ॥६९ ॥
प्रात सुपीगाम्भसि मज्जतीना-मङ्गेषु तासामुदितेऽथ जाड्ये ।
प्रेयस्समासत्तिकृतं तदित्थ, ततः परो विज्ञतरोऽपि नावैत् ॥७० ॥
आनाभिमग्ना हिमवारिनग्ना, लग्नाशयास्तत्र तरङ्गभग्ना· ।
सीत्कारसौम्यस्फुरिताधरं ताः, कथञ्चनोचु र्मिलिता मुकुन्दम् ॥७१ ॥
अये ! न किं त्वामनुशास्ति कृत्य स नीतिनिष्णः स्वयमेव तात ।
आर्योऽपि यत्कार्यमनार्यपार्यमेव महोग्र त्वमहो ! तनोपि ॥७२ ॥
राजाऽविनीतेषु निशातदण्डो, जागर्ति कस सुतरा नृशास ।
मनोज्ञरूपोऽन्निनर्थरगोभि, र्मा हन्त, तद्दृष्टिपथ प्रयासी ॥७३ ॥
समृद्धिचित्रीकृतवासव्रस्य, त्वदेकतोकस्य तु घोयभर्तु· ।
सुतस्य ते साधु यशो विदध्यादेतत्कुमारीचयचीरचौर्यम् ॥७४ ॥
व्रजाधिराज श्रुतदानकीर्ति, र्महामनास्त्वज्जनक· क्व नन्द· ।
लोकेऽयशोभारभृतिप्रवीण, क्व तत्सुतश्चीरपटच्चर[१]स्त्वम् ॥७५ ॥
तात· स्वय याति तनूजभावमिद विदा वाक्यमृत तदा स्यात् ।
यदि त्वयीदृङ्न भवेद्विगीतं, गोविन्द ! नन्दप्रतिकूलशीलम् ॥७६ ॥
अचोरि गव्य शिशुनैव येन, प्रायो व्रजेस्मिन् प्रतिसद्म शश्वत् ।
यून· पुनस्तस्य तवाद्य वा किं, चित्र महार्घ्याम्बरचौर्यमेतत् ॥७७ ॥
अपूर्णतारुण्यदशोऽप्यजस्र, पराङ्गनाली-परिहासनिष्ण ।
अपार्थितार्यस्वजनोपदेशो, न त्वादृशः कोऽपि पर पृथिव्याम् ॥७८ ॥
पीयूषधाराभिरिवाभिषिञ्चन्, मनासि तासा श्रुतिभि· सहाऽसौ ।
इत्थं सनर्मस्मितमालपन्ती, रुदाहरत् प्रीततर· किशोरी· ॥७९ ॥
स्तनन्धयेनैव मया कियन्तः, कृता· कृतान्तातिथयोऽङ्ग ! दैत्या· ।
श्रद्धायताद्धाऽञ्चति यद्यथापि, कसं ध्रुव शंसत राजहसम् ॥८० ॥
एता न तावत्सितपीतशोण-श्यामा ललामा भवदीयशाट्य· ।
विभान्ति, किन्तु प्रचिताः समन्तात्, कदम्बकिञ्जल्कपलाशभास· ॥८१ ॥
आविष्कृताऽहो भवतीभिरेव, च्छलप्रवीण· ! सरणि र्नवेयम् ।
युवान्तरस्तेयसमन्तत्रोऽपि, स्वयं हि निन्दन्ति निरागसं माम् ॥८२ ॥

१. पटच्चरश्चौरः ।

सन्धि कटाक्षेण विधाय यूनामन्तर्मनोरत्नमरं हरन्त्य ।
यूय कथं ब्रूथ पटच्चरं मां, जनं स्वतुल्यं जगदीक्षते वा ॥८३ ॥
वयोऽथवा दर्पकदर्पशालि, प्राभ्रंशयद्वः सहजाद्विवेकात् ।
उन्मूल्य काम कुलशीलनिष्टामारोप्यते यन्मयि तस्करत्वम् ॥८४ ॥
नवीनतारुण्यमदेन यासामौचित्यचिन्तां कुरुते न चेत- ।
तासामुपालम्भशतेन किं मे, मत्तोदितं नाद्रियते हि कश्चित् ॥८५ ॥
इत्युक्तयन्तीरुपपत्तिभाज, साकूतमाकर्ण्य मुकुन्दवाच ।
प्रीता पुनर्विस्मितचेतसस्ता, स्फुटानुरागं प्रियमेवमूचुः ॥८६ ॥
गोपाल !मैव विनयस्म हासीरासीम लोके कुशलाय कार्यम् ।
परत्र नैषा कथमाविरासीद्, दासीषु काऽस्मासु विडम्बना ते ॥८७ ॥
परार्तिहर्ता प्रथित पृथिव्यामप्यर्तिमित्थं तनुषे तुषारे ।
अस्माकमेव त्वपहृत्य शाटीश्चौरीकरोषि स्फुटमङ्ग !चास्मान् ॥८८ ॥
व्रजेन्द्रपुत्रोऽप्यबलास्त्वमस्मान्, प्रबाधमानो दयसे न किं द्राक् ।
तारुण्यसूर्योष्मभरेण वा ते, कारुण्यसिन्धो किमशोषि पूर ॥८९ ॥
अलक्षितस्त्वं वसनानि हृत्वा, करोषि लज्जाविधुरा यदस्मान् ।
इमामपूर्वां परिहासशैलीमशिक्षथा ही ! पशुपाल ! कस्मात् ॥९० ॥
वग्जालमातत्य निवाद्य वेणु-र्वीणा प्रवीणो ललनाकुरङ्गीः ।
प्रेमावटे मङ्क्षु निपात्य तक्षन्, कटाक्षबाणैरसि लुब्धकस्त्वम् ॥९१ ॥
मुग्धा वराकी सरला कुलीना, बाला वशीकृत्य नवैर्विलासैः ।
स्मरेषुभि सादयतो नितान्त, न जायते हा करुणा कथं ते ॥९२ ॥
सौभाग्यपूर्णं गुणिनं प्रसादादासादयन्ति स्वयमेव बाला ।
अये ! शरत्पर्वसुधामयूखं, प्रयस्य कः प्रापयते चकोरी ॥९३ ॥
दोषोऽथवा नेह तवास्ति कश्चिच्चकास्ति होढक् पुरुषस्वभाव ।
कुतोऽन्यथाऽर्थस्फुटकेरकालीममन्दमास्कन्दति वा मिलिन्द ॥९४ ॥
इमास्त्वदादेशवशंवदा नो, वदासि यत्साधयितु प्रवृत्त
अपीङ्गितं स्वापमवाप्तुमर्थं, व्यर्थं परिश्राम्यति कस्त्वदन्यः ॥९५ ॥
वाग्भङ्गिसंसूचितसान्द्ररागा, बाला- कटाक्षान् निभृत क्षिपन्तीः ।
अमूल्यनर्मस्मितकोमलास्या जगाद भूयो व्रजराजसूनु ॥९६ ॥
अनूढपूर्वासु परं न तावद्, युष्मासु भीत्यै परकीयता मे ।
अतोऽपदेशान्तरमेव बाला, विन्यस्य कालक्षपणं कुरुध्वम् ॥९७ ॥

मृषाऽतिखेदाभिनयप्रतीप-व्याहारभङ्गी भवतीभिरोक्त् ।
यतोऽध्यगायि ध्रुवमेव तस्मान्मयाऽप्यधीता परिहासशैली ॥९८ ॥
करोमि किं वः शरदिन्दुलक्ष्मीमप्याक्षिपन्त्याननमण्डलानि ।
सरोजिनीकोशगुरूनुरोजान्, वलीर्विलोलीकृतसिन्धुवीचीः ॥९९ ॥
नाभीः स्फुटत्तामरसोदराभा, हिरण्यरम्भाजयिनीस्तथोरूः ।
स्वैरं पिबन्ती प्रतियन्थभीते, वासोऽर्पणाद् वारयतोऽक्षिणी
माम् युग्मकम् ॥१०० ॥
अथापि वासांसि तदाऽस्मि,दद्या[1]प्रसद्य हृद्याः सकलाः समं चेत् ।
यथास्वमेत्यान्तिकमाददीध्व, मिथः कलिर्वो ध्रुवमन्यथा स्यात् ॥१०१ ॥
प्रमिताक्षरा मितिगिर सरसा[2]-मवसाय तस्य धृताञ्जलिरसः ।
विदलत्त्रपा श्लथदृशा सहसा, पयसो यहि समपप्तु सहसा ॥१०२ ॥
उन्मज्ज्य पूराद्यमुनापयोनिधे[3] राभीरकन्याप्सरसस्तटे स्थिताः ।
नीपद्रुमारूढमगूढविग्रहा आसादयन् गोपकिशोरवासवम् ॥१०३ ॥
कुललसना यदिमास्तथाऽपि[4]- अपि सकला सलिलाञ्जलिं ह्रिये ।
तदनुचित न तु भावनापतो- कृतचरकृष्णनिदेशवैभवात् ॥१०४ ॥
अथ तथा स परीक्ष्य रतिं दृढां, प्रियतमो नितरां मुदितोऽददात् ।[5]
सह तदीयपटैरतिदुर्लभं, निरवधूतपदं स्ववधूपदम् ॥१०५ ॥
सपुलकाः परिधाय तदाऽम्बरं, गतनिमेषमुदीक्षणतत्पराः ।
रमणकामममनक्षरमेव ता, मृगदृशो व्रजनन्दनमूचिरे ॥१०६ ॥
केलिलोलुपमनङ्गविलसितैः,[6] सुन्दरीव्रजमनन्तरमवयन् ।
शारदोज्ज्वलनिशासु विहरणं, केशव समवधार्य निरगदत् ॥१०७ ॥

१. उपेन्द्रवज्राच्छन्दः ।
२. प्रमिताक्षराच्छन्दः ।
३. इन्द्रवंशाच्छन्दः ।
४. मालतीच्छन्दः ।
५. इतो द्रुतविलम्बितवृत्तम् ।
६. [illegible] ।

दयिता शरद्यधिगमिष्यथेप्सितं,[१] त्वरयेति चाटुपटुना प्रबोधिताः ।
मधुसूदनेन सह ता रिरंसवस्तदुपायदुश्चरतप क्लम जहौ ॥१०८ ॥
अथेच्छन्तीर्गन्तु पदमपि पुरो नैव वामाः,[२]
सकम्पाः पश्यन्तीरदितजड़ता- स्वस्य वक्त्रम् ।
विदग्धो मुग्धाक्षी कथमपि समाश्वास्य तुष्टा,
व्रजान्त ता नेतु स्वयमनुययौ कृष्णचन्द्रः ॥१०९ ॥
अथ 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रधी-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचितः ।
विदग्धाच्यों राधापरिणयमहाकाव्य-घटको,
निसर्गोरु सर्गो विरतिमगमत् प्रम्यक्रमित ॥११० ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के 'आभीरीचीरापहारो' नामैकादशः सर्गः ।*

१ प्रबोधितच्छन्द ।
२. प्रवरललितछन्द ।

## अथ 'देवेन्द्रदर्पदमनो' नाम
### द्वादशः सर्गः

तदनु[1] सनातनरीतिमाश्रिताः शरदि कदाचन घोषवासिनः ।
चरिवसितुं समवेत्य वासवं प्रतिसदनं प्रमुदोदयंसिषु ॥१ ॥
विभवसम्पत् समपद्यताभितो, द्रुतमिह वृत्रहसत्रसम्भृतिः ।
भवति विलम्बलवोऽपि हि क्वचिद्, किमु महदिष्टनिमित्तसङ्गतौ ॥२ ॥
सुरपतिपर्वमहोत्सवाय ते, ननु भृशमुत्सहमानमानसाः ।
अकृपणसारस्वरेण्यवल्लवास्तृणमिव नाजगणन् वसु व्यये ॥३ ॥
उपकरणोपगमादुपक्रमं, गुरुमवलोक्य मखस्य वज्रिणः ।
मदमपहर्तुमथानभिज्ञवत्, पितरमपृच्छदद्ः सदस्यजः ॥४ ॥
कथमिह तात ! समुह्य सम्भृतीरथ विविधाश्च विधाय सत्क्रियाः ।
प्रतिगृहमुत्सहते जनो व्रजे, क्वचिदपि पूर्वमदर्शि नेदृशम् ॥५ ॥
सुकृतकलामनपेक्ष्य दुर्ग्रहादपि च विधूय विवेकपद्धतिम् ।
गुरुबुधवृद्धनियोगिनि व्रजे, कथमिह सम्भवतीतरोद्यमः ॥६ ॥
विदधति तद्ध्रुवमेवमुद्यमं, कमपि सतं सकलास्तितासवः ।
परमधुनाऽवधि दैवपित्र्ययो र्वत कतरोऽयमिद न वेद्म्यहम् ॥७ ॥
यदि यजनं विधिरस्य कीदृशः, किमथ फलं, कतमा च देवता ।
इति शिशुमप्यवगन्तुमुत्सुकं, स्फुटमिह मामनवद्य ! गद्यताम् ॥८ ॥
ध्रुवमिह कर्म भवद्विधित्सितं, गुरु जनयेदथवा प्रयोजनम् ।
अनवगतोपकृतिं कृतिकृती, वितनितुमङ्ग ! नहि प्रवर्तते ॥९ ॥
तदयि रहस्यमपि प्रवर्तना-प्रथितनिमित्तमल फल द्रुतम् ।
समवहितं स्वहितं भवद्वचो, निशामयितु सतृपं वदार्य ! माम् ॥१० ॥
इयमति नन्दमनन्दयद् बुधं मधुमधुरा मधुवैरिभारती ।
परिमल-वैभवराशिनासिकं, सुखयति कं विकचा न मालती ॥११ ॥
गुणगरिमप्रतिपादितादरः स्फुटमहिमानमथाच्युतं पिता ।
अवददति प्रणयेन व॰॰॰ ! त, न किमपि, यद्भवतोऽपि गोप्यते ॥१२ ॥
प्रतिसममत्र पुलोमजापतेः क्रतुममुमेव चरन्ति वल्लवाः ।
अथ सलिलानि यथामनोरथं, ननु मुदितो मुदिरै र्ददाति सः ॥१३ ॥

१. इत १० श्लोक यावत् मालतीच्छन्दः । उदयमिपुरयमं चक्रुः ।

नियतमतोविपुला वहूलषा, तृणपटली परित प्रजायते ।
[१]पशुसमजोऽञ्चति तेन श, ततो, वयमपि जीवनमुत्रयागहे ॥१४ ॥
अनवहितो यदि वाऽभ्यसूयको, यजनमिद विदधीत नैव यः ।
स कवलित शतमन्युमन्युना, सपदि लभेत निरन्तरापद ॥१५ ॥
तदखिललोकपतिं पुरन्दर, प्रणयपुरस्सरमानत परम् ।
त्वमपि घटस्व मखाय येन मे, निरवधि शर्मपरम्परोल्लसेत् ॥१६ ॥
इयदभिधाय हित च सूनृत, विरमति वल्लवपुङ्गवे वशी ।
सुरपतिदर्पमपासितुं पुन, स्मितसुभगा गिरमाददे हरि· ॥१७ ॥
क्षणमयि ! घोषनिवासिवार्धका !, श्रुतयशसोऽवदधत्वनुग्रहात् ।
किमपि शिशोर्मम यावदीरितं, श्रवणपथे भवता प्रवर्तते ॥१८ ॥
अहह विचारचणा ! विविच्यता, प्रभवति किं पयसे पुरन्दर ।
अथ विदुषामपि चेद् भमस्तदा, श्रुतपरिशीलनमेव निष्फलम् ॥१९ ॥
नयनिपुण परिणतशासन, प्रकृतिकदम्बमिव क्षितीश्वरः ।
त्रिगुणमिद जगदीशिता वशे, कलयति कर्मसम दिशन् फलम् ॥२० ॥
जनिशतसञ्चितकृत्यकल्पित, नियतिवशा नरवद्दिवौकस· ।
यदि वितरन्ति फल, तदाङ्ग ! ते, स्वयमथ लेशमपीह नेशते ॥२१ ॥
जनयति नाऽत्र सर्वं स वारिद[२] जलमयमन्नमिद तु तत्प्रजा ।
इति परिणामपरम्परामहो, स्वकृतिवशामवगत्य किं भयम् ॥२२ ॥
स भवतु न सुरशेखर सुहृद्, रिपुरथवा न तत प्रयोजनम् ।
पशुपशुपावनपुण्यभागसौ, ननु शरण गिरिरेव सर्वथा ॥२३ ॥
वहति मरुद्धृते वसुन्धरा, तुहिनकर· शिशिरीकरोति च ।
तपति यथा सविता स्वभावतो, जहति तथैव पयोमुचोऽप्यप· ॥२४ ॥
जगति सदाऽखिलभूतसंहतिः, यदि रजसा[३] लभते प्रवर्तनाम् ।
वदत तदा सलिलानि वर्षितु, घनततिरेव लभेत किं न ताम् ॥२५ ॥
रविरुपनीय रस करं क्षिते, द्रविणमिव प्रकृते नृपालक ।
स्वयमुचितेऽवसरे च तन्मुदे, त्यजति तदत्र वृषा किमिज्यते ॥२६ ॥
प्रभवतु नाम पुलोमजाप्रिय, प्रबलबलस्त्रिदिवौकसां पुर ।

१ [illegible] । [illegible] ।
२ [illegible] ।
३ रजं गु[illegible]न ।

गिरिकुहरे वसता तु नस्ततो, न फलभये ! न च भी. कदाचन ॥२७ ॥
ननु पशुपालनमेव गोदुहां, श्रुतमतधर्मपदे प्रतिष्ठितम् ।
अथ न वय सुरराजपूजने, वत सुतरामधिकुर्महे महे ॥२८ ॥
श्रुतमवमत्य गता स्वतन्त्रता, विदधति ये फललिप्सया क्रिया ।
किमपि ततोऽश्नुवते प्रयस्य चेत्, स्फुटमवगच्छत दु खमेव ते ॥२९ ॥
अपि च गिरि परमो गुरुस्तथा, शरणमय सुचिरेण योऽस्ति न. ।
रिपुरिह तस्य गरुत्रिपा .नात्, किमिति वृषा प्रतिवर्षमर्च्यते ॥३० ॥
अथ गुरव. ! फलमीप्सथाञ्जसा, यदि खलु विश्वसिथोदिते च मे ।
तमफलिन परिहृत्य वासव, यजत तदा गिरिराजमादरात् ॥३१ ॥
इति मधुसूदनसूक्तिकौमुदी, श्रुतिसुषिरेण निविश्य गोदुहाम् ।
हृदयवियद्विमल वृषार्चन-ग्रहतिमिर व्यवधूय चाद्युतत् ॥३२ ॥
ऋजुमतय:, पशुपालकुञ्जरा , सपरिकर विनयेन बोधिता ।
मकरिपुवाक्यमहत्त्वकोविदा, नित्रनृतिरे यजनाद्विडौजस ॥३३ ॥
अपिच मुकुन्दगिरा निराग्रहास्तितनिपत्रो गिरिराजपूजनम् ।
समुदितसम्भृतिमेव ता पुन र्द्रुतमुपयोक्तुमुपाक्रमन्त ते ॥३४ ॥
प्रथममथ श्रुतिमङ्गलध्वनि र्द्विजविहितो विधिविघ्नमाहरत् ।
अनभिहते प्रतिबन्धके क्रिया, व्रजति यतो न समग्रता क्वचित् ॥३५
श्रुतिनिनदै र्नगयागदीक्षितस्तुमुलतमै र्द्विजराजसञ्चय· ।
प्रकटयितु निजवीर्यवैभव, समदमिवाह्वयतेस्म वासवम् ॥३६ ॥
सविधि विधाय तत कुशण्डिका[1] ज्वलति नवीनरथाविवानले ।
यव-तिलगव्यमयाहुतीरिमे,पशुपतिवाग निचिक्षिपु पृथक् ॥३७ ॥
परिहित-नूतनपट्टवाससो,हुतभुजि साधुविधानसंस्कृते ।
धृतरुचय कलधौतभूषणैरवनिसुरा हवन वितेनिरे ॥३८ ॥
अतनुमवेत्य रुषा ननु स्फुरन् विकच-पलाशरुचि शुचिर्जवात् ।
पशुपकृता निकृति घुमन्मुखं[2] गीदतुमिवोर्ध्वमगाद्दिवस्पतिम् ॥३९ ॥
प्रभुपुरुहूतहितेन वह्निना,प्रहिततमा किमु धूमसन्तति ।
वियति बभूव भविष्यदत्यय-प्रसरनिदानपयोधरावली ॥४० ॥
नवतपनीयविभूषणं-स्रजा,मृदुयवसै शिशिरेण पाथसा ।

१. हेमाग्निभूसप्स्यासदि कर्म ।
२ अग्निर्मुख देवानाम् ।

अखिलविषाणखुरे पुनर्धन-सुतनवनीतविलेपनेन च ॥४१ ॥
बहुविधधातुविभक्तिशालिनी,स्फुरदुपसर्ग[१]-निपातकृन्मुखा ।
स्फुटमिव पाणिनिशापद्धतीस्तदनुसवत्सगवीरमीजिरे ॥४२ ॥
क्षितिमणिधेनुसुवर्णदक्षिणा-वितरण-नत्यशनार्पणस्तवैः ।
दलिततृषा श्रुतिपारदृश्वनामनुविदधेऽपचितिं द्विजन्मनाम् ॥४३ ॥
अधिकनकासनमध्यतिष्ठिपत्,प्रथममथो मृदुवाचमार्पिपत् ।
उपचरणं परिशिष्टमिष्टधुक्,कलयितुमारभता नु भूभृतः ॥४४ ॥
मृगमदचन्दनकुङ्कुमाक्षतैः कुसुमपयोबलिभूषणाम्बरैः ।
अतनुफलोदयमूलमादरादतनुत विप्रचयो नगार्चनम् ॥४५ ॥
उपदिशति स्वयमच्युते तथा,यतमनसो गिरिमार्हयन् द्विजाः ।
कथमपि नैव विना प्रवर्तकं,प्रचरति कश्चन नूतनो विधिः ॥४६ ॥
उपचरितुं चतुरा स्वयं पुनः हरिमुपदेशकमाश्रितास्तथा ।
झटिति नगाध्वरमुत्तमं व्यधुर्भवति हि सम्भृतिसाक्षिणी क्रिया ॥४७ ॥
स्ववचसि विश्वसनाय गोदुहां,यजनफलं स्फुटमाशु दर्शयन् ।
वपुरपरं पुरुपीवरं गिरेः, कुतुककरोऽथ दधार माधवः ॥४८ ॥
विपिनपतिं वनदेवताप्रियं, परशरणं च गवां सगोदुहाम् ।
परिचरणाद्भवतामनाविलात्, प्रमुदितमेतमवैत मा नगम् ॥४९ ॥
विलसतु वः कुशलं सदाऽभितो, व्रजतु वियत्कुसुमात्मतां विपत् ।
स्फुरतु च देवगवाग्रजन्मना, मम च परं प्रणयो निरन्तरम् ॥५० ॥
इति निगदन् रुचिरं जनार्दनः कतिचन शैलमिषाज्जघास तान् ।
घृतमधुपायसपूपशष्कुली-पृथुकपयोदधि-तेमनौदनान् ॥५१ ॥
प्रकटमवेक्ष्य महीधरं वत, च्युतविशयं पशुपं सहाच्युतः ।
स्वमिव शिशुः प्रतिबिम्बितं स्फुटं तुलकभरं प्रणनाम दण्डवत् ॥५२ ।
प्रकटतमाय कलिन्दनन्दिनी परिसरकाननचक्रवर्तिने ।
शिवततये गतये गवां च नो, नगपतयेऽस्तु नमोऽनुवासरम् ॥५३ ॥
जय धरणीधरकुञ्जर ! प्रभो ! स्वमहिमदर्शनमुग्धचेतसः ।
प्रणयदृशा निपुणं निभालयन्नव नवकीर्त्तियुतो व्रजौकसः ॥५४ ॥
इति नुतिमालकलयन् स गोदुहां, सपदि वितीर्य वरानभीप्सितान् ।
सह तदुदीर्णनमोजयस्वनैरनुपदमन्तरधाद्धराधरः ॥५५ ॥

---

१. युग्मकम् । उपसर्गपक्षे उत्पातः ।

अनवममेवममुं विधाय ते, त्वरितमधारि मयासव· सवम् ।
[1]अमृतभुजोऽञ्चितनृत्यगीतय·, सपरिजना वरवस्त्रभूषणा ॥५६ ॥
शिखरदरीसुषमात्तदृष्टय·, [2]श्रुतमृगपक्षिकलस्वना· शनै ।
पृथुशकटावलिमास्थितास्ततो, व्यदधत सानुमत· परिक्रमा ॥५७ ॥
शिखरिमखात्सुखमाप्य वल्लवा, न सुरपते पुनरैयुरध्वरम् ।
स्वमभिमत प्रतिपद्य पद्यया, स्पृहयति राजपथाय क· सुधी ॥५८ ॥
विफलमिति प्रहत वनेचरै, स्वमखमवेत्य चुकोप वृत्रहा ।
न परिभव क्षमते नृपोऽपि चेन्निखिलजगत्पतिरेष कि पुन ॥५९ ॥
त्रिभुवननायकमेकमच्युत, न परिचिकाय तदा रुषा वृषा ।
ध्रुवमचिरेण मनीषिणोऽपि हि, द्रविणमद पिदधाति शेमुखीम् ।६० ॥
दृशा सहस्रेण विकस्वराणा, समीक्षमाणोऽपि सुरेश्वर· स्वान् ।
दीप्तप्रभाव प्रति नन्दसूनोरुवाह मोहातमहो महान्ध्यम् ॥६१ ॥
कृष्णप्रतापतपनातपमुग्धदृष्टि-
र्भीमस्वनस्तमसि जाग्रति भासुराक्ष ।
दोषाश्रय परनिभूतिहरोऽतिवक्र
साथीचकार निजकौशिक[3]-नाम शक्र ॥६२ ॥
दिवस्पतेराप तदा प्रतिष्ठा, यथा विवेकापगमाद् वृषत्वम्[4] ।
तथा रुषोऽदभ्रतयैव मन्ये, रूढा तदीया शतमन्युताऽऽसीत् ॥६३ ॥
किसलयशोणसमस्तलोचन,प्रकटपुरस्स्मयवत्सुराधिप ।
भ्रुकुटिमलीमसपन्नगीतते·, समुदगिरद्गरलोपमा गिरः ॥६४ ॥
सङ्कल्पमात्रसलिलक्षपितकल्पभेदान्
कल्पद्रुमाधिपतिरुज्झितशैलकल्पान् ।
आहूय भूयसि रुष· प्रसरे स्वभृत्यान्,
सार्वर्तकादिजलदानवदद्दिवीन्द्र· ॥६५ ॥
भोभोभटा ! मदधिरूढभरत्रिलोकी-
साम्राज्यगौरव-समर्थनजागरूका· ।

१. यज्ञशिष्टममृतम् ।
२. युग्मकम् ।
३. कौशिक इन्द्र उलूकश्च ।
४. वृषत्वमिन्द्रत्व वृषभत्व च । मन्युर्दैन्ये क्रोधश्च ।

अम्भोधरा ! शृणुत गोष्ठसदः स्फुटाव-
ष्टम्भा हठान्मम शठा यदपष्ठु[१] तेनु ॥६६॥
वृत्रोऽप्यतिक्षपितवृत्रविवृद्धपक्षो, वृत्राधिप, समरसीमनिकृत्तवृत्र ।
वृत्रान्तकार्चितपदो निगृहीतवृत्र[२]-श्रित्र भवामि पशुपालनिकारपात्रम् ॥६७॥
आ- ! ! स्तेऽनन्यगते विशृङ्खलमते क्षोदीयस प्रेक्षिण,[३]
कृष्णस्यानुमतेन सत्रविमुखाः क्षीणायुषोवल्लवा ।
श्रद्धाबद्धकरामरव्रजधरापातालसच्छेखरा-
रूढाज्ञस्य ममापि मूढमनसो रीढामगूढ व्यधु ॥६८॥
तत्तान् मत्तान् वटुपटुगिरा स्तब्धविश्रब्धचित्तान्[४]
विद्युद् द्योतै विदलितदृशो वल्लवान् क्षुल्लसारान् ।
शष्पस्वानैरतिबधिरितान् कम्पिन कान्दिशीकान्,
क्षिप्र क्षुण्णान् कुरुत करका काममाकीर्य धुर्याः ॥६९॥
क्षोणीपृष्ठनिसृष्टभैरवरवस्थूणास्थविष्ठक्षर-
द्धारासारभरेण गोष्ठमखिल सवर्तसवर्तका ।
सिन्धूकृत्य करालकालकवल नीत्वा सबन्धूनिमा-
नन्यान्दर्शयताचिरेण सुभटम्मन्यान् मदाग फलम् ॥७०॥
इत्थ निदेशेन सहेव भर्तु. सहर्तुमारात् पशुपान् प्रयाता ।
गम्भीरघोषा परिवार्य घोषं, रसातलीचक्रुरमी स्वभासा ॥७१॥
चिरविचलितचारा. सृष्टघोरान्धकारा-
स्तुहिनततितुषारा वृत्तशुण्डानुकारा ।
तडिदुरुपरिवारा प्लावितोच्चैरगारा
मुमुचुरतुलसारा वारिदा भूरिधारा ॥७२॥
कृष्णात्मानोऽपि जीमूता, गोपान् कृष्णात्मनोऽखिलान् ।
शत्रार्थेऽपीडयन्, स्वीय-स्नेहो राजानुगेषु क ॥७३॥
शश्वर्त्वलाञ्चलमपनयन्नामृशन्नङ्गमङ्ग,
गत्याक्षेप मपदि कलयन् कल्पयन् कम्पजाड्ये ।

१. प्रतिकूलम् ।
२ 'वृत्रोरिपौ घनेध्वान्ते शैलभेदेच दानवे' इतिमेदिनी ।
३ अनन्यशरणस्य स्वशरणस्य च । उद्दनत्रवृत्ते स्वतन्त्रबुद्धेश्च । अतिशुद्रस्य, अणीरणीयमश्च । नर्तकस्य बुद्धिमनर्थेनि निन्दामुनिपक्षयोरर्थी ।
४. मन्दाक्रान्ता ।

भूयो मोहं मनसि जनयन् गोपसीमन्तिनीनां,
झञ्झावातः प्रसभमभयोऽभीकतामभ्यनैषीत् ॥७४ ॥
सघनैर्घनवर्षपीडितो, गजगामी गुरुसन्निधौ मुहुः ।
तरुणीनिवहो जहौ चितं, न पुनश्शीलविभूषणस्त्रपाम् ॥७५ ॥
करुणाप्रवणाशया परं, भृशमासारनिपीडिता स्वयम् ।
वपुषाऽऽस्तृपताशु तोककं, विलसद्धर्मधुराः पुरन्ध्रयः ॥७६ ॥
निसर्गभीरुस्तनयैस्तु भाषितं, जलाकुलाभीरकुलाबलाकुलम् ।
पतत्करालाशनिनिःस्वनश्रुतेस्तदाऽऽश्रयत् कामपि कर्कशान्दशाम् ॥७७ ॥
विशीर्णाङ्गा ग्रावव्यसनकरकाठिन्यकरका-
निपातादाघातादशनि-विषमाघातमतिदात् ।
निराधारा धाराधरसलिलधाराऽऽप्लुतभुवो,
ययुर्घोषावासा विपदि शरणं कृष्णचरणम् ॥७८ ॥
गोष्ठे विलोक्य विपदं शतमन्युमन्यो-
रन्योद्यमं च कलयन्ननलं तदर्थम् ।
गोवर्धनं फलवदाख्यमफल्गुकार्यं,
शैलं[1] शिलोच्चयमिव साधु दधौ मधुद्विट् ॥७९ ॥
मरुत्वता नूनमुपप्लुतं व्रजं, विचिन्त्य तद्दर्पशमाय केशवः ।
तदेकहस्त्यैव शयस्य शेखरे, निवेशयामास वशी नगेश्वरम् ॥८० ॥
तेनैव किंवा गिरिणा स्वपक्ष-च्छेदापकारं स्मरता मघोनः ।
चिरेण लब्ध्वा प्रसरं प्रपेदे, तस्यापि पक्षक्षतिकारणत्वम् ॥८१ ॥
दलन्मृणालीमृदुलोऽस्य पाणि, गोवर्धनं भूधरमाशु धर्तुम् ।
जगत्त्रयीरक्षणलब्धदीक्ष, स्थेयानदक्षोऽपि बभूव दक्ष ॥८२ ॥
तत्र वीक्ष्य नितरामवकाशं[2] माधवो धृतधराधरगर्ते ।
स्वैरमत्र विशतेति तदानीमादिदेश सकलान् विकलास्तान् ॥८३ ॥
अभितमुदरं जीवाः काले हरेरिव भूतये[3]
विततविवरं सद्यो गोवर्धनस्य गिरेरमी ।
सहपरिकरं गोभिर्वत्सैर्वृषैर्वसुभीरथं-

१. छन्दकम् ।
२. स्वागता ।
३. हरिणी ।

विविशुरखिला कृष्णादेशादृता व्रजवासिन: ॥८४ ॥
गोष्ठेऽच्युताश्रयिणि चण्डविचेष्टितानि,
व्यर्थीबभूवुरखिलानि पयोधराणाम् ।
पूर्वं वलीमुखबले[१] रघुनाथबाहु-
स्तम्भाविते स्फुटमिवासुरसैनिकानाम् ॥८५ ॥
मोघीभवत्सु विकटाक्रमणेष्वदोषे,
घोषेऽपि नन्दति च नन्दसुतानुभावात् ।
साहायकाय जलदावलिरस्तदर्पा-
प्रायश्चकार पुरुहू: पुरुहूतहूतिम् ॥८६ ॥
श्रेयश्शचीकुचविशेषकशिल्पकल्पी,
देवोऽपि कोपकलुषीकृतदृप्तचेता: ।
दम्भोलिभासुरकरोऽभ्रमुवल्लभस्थ
स्वाम्भोमुच सहचकार चिराय शक्र: ॥८७ ॥
शिरसा कुलिशाहतीं र्मुहु:, सहमानोऽपि जुगोप गोपकान् ।
गिरिराट्, शरणागतावन-प्रवणा हि प्रकृति र्महीयसाम् ॥८८ ॥
विफलमवेक्ष्य तदा स्वमुद्यम, त्रिदिवपति र्विमना मनागभूत् ।
अभिमतमप्रतिपद्य यत्नवान्, न खलु विषीदति क: सचेतसाम् ॥८९ ॥
सरम्भसम्भ्रमविरामनिशुम्भदम्भो[२]
दम्भोलिपाणिरियदाम्भसदुर्विलम्भम् ।
सम्भाव्य तत्र जनितस्थितिविप्रलम्भ,
स्तम्भं परम्भगवतश्चरितेन लेभे ॥९० ॥
बाल शिरीषमृदुलाङ्गुलिशेखरेण,
शैल दधाविति विलोकनजाद्भुतोत्थम् ।
नून निमेष-विधुरत्वममर्त्य-लक्ष्म-
व्याजात्सहस्रनयन सुतरा तदाऽधात् ॥९१ ॥
छत्राकश्रीवर्तुलस्वीयकाय-व्यासक्तैकाघद्विषद्बाहुदण्ड: ।
रक्षन् सर्वानाश्रितान्वर्षकृच्छ्राच्छत्रच्छायां स्वाच्छिनच्छैलराज ॥९२ ॥
बालस्य पाणिकमलात्पतन महाद्रे-

१ वानरसैन्ये ।
२ नम्रकपट: ।

राशङ्क्य वत्सतिमवश्यहृद्दश चीरा: ।
नन्दादय स्मितवलाकलिता समन्ता-
दासञ्जयन् बहुविधायतलौहयष्टी ॥९३ ॥
वत्सला स्नुतकुचा यशोमती, तानवेन तनुजस्य कातरा ।
तादृगद्रिचिरधारणश्रम-ध्वंसनाय समवाहयद्भुजम् ॥९४ ॥
वैदग्ध्यभाजि ननु कम्पिनि केशवे स्यात्,
पातो गिरेरितिभिया चतुरास्तरुण्य: ।
तत्प्रेमपूर्वचिरमग्रहृद्रोऽपि नो त,
नीचै प्रसञ्जितदृशो ददृशु: प्रकाशम् ॥९५ ॥
दृग्भिश्चकोराकृतिभि: पिबन्त:, शश्वन्मुकुन्दाननचन्द्रिका ते ।
दिनानि सप्त क्षपयत् प्रमोद-निद्रावशीभूतहृदो व्यनैषु: ॥९६ ॥
करेण सप्ताहमुदुह्य भूधर, जुगोप गोपप्रवरो व्रजौकस: ।
विपत्प्रतीकारपरा: स्वयं हि तान्, प्रपालयन्त्येव मनस्विनो हितान् ॥९७ ॥
तिरस्कृत वल्लवसूनुनाऽमुना, तमेकतो गाढमखुम्यदक्षया ।
वैरप्रतीकारनिराशचेतस, चिन्तासखी शक्रमपत्रपाऽन्यत: ॥९८ ॥
अथ च मृथा स्तनिता: स्तनन्यये, व्रजमवति प्रसभ हरौ हरे: ।
मृदुलवचोभिरवाङ्मुखा: शनै, र्हतमनसो न्यवृतन् पयोमुच ॥९९ ॥
शान्ते वर्षे, समीरे मृदु वहति, रवौ सम्यगाभासिविम्बे,
ध्वस्तस्तम्भेऽस्तजम्भे प्रविशति च दिवं स्निग्धगम्भीरदृष्टि: ।
शैलं भूमौ सलील सपदि वत यथास्थानमास्थाप्य रेजे,
प्रेमानन्दाब्धिमज्जद् व्रजजननिहितस्रग्धरा कृष्णमूर्ति: ॥१०० ॥
अयं 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रधी-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचित ।
प्रभा-[1] जुष्टो राधापरिणयमहाकाव्यघटको,
निसर्गश्री: सर्ग: परिणतिमगादर्यमयित-[2] ॥१०१ ॥
इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के 'देवेन्द्रदर्पदमनो'
नाम द्वादश: सर्ग ॥

१. अस्य टिप्पणी ।
२. द्वादश ।

॥इति प्रभायां द्वादश सर्ग ॥

## अथ 'वासवस्तवो' नाम
## त्रयोदशः सर्गः ॥

अथाघो[१] गोलोकात्प्रणयपरतन्त्रा प्रचलिता,
समन्तात् सिञ्चन्ती सरणिममितौघेन पयसाम् ।
चतुर्वर्गं दातु ननु कुचचतुष्कं धृतवती,
प्रसूःकल्याणाना सुरभिरभिपेदे व्रजभुवम् ॥१ ॥
चिरात्कृष्णालोकात्सफलयितुमद्धाऽक्षियुगलं,
महत्यौत्सुक्ये ऽपि त्वरयति नितान्तं प्रतिपदम् ।
अशक्यन्ती वेगाच्चलितुमकृशोधोभरवशा-
दसावञ्चद्द्वेपा पथि गतिविशेषादतिवभौ ॥२ ॥
प्रसूतिः सर्वेषामभिलषितसिद्धे र्दिविषदा,
विभूतिः पुण्यानामविलुलितगोलोकमहसाम् ।
तपस्सम्पन्मूर्ति प्रखरभवजूर्ति[२]-प्रतिभटा,
घटाभोधोत्सेधा हरिमनुसिषेधामरगवी ॥३ ॥
उपायान्ती दूरान्नलिनजनियुक्ता नभसि तां,
सिताम्भोजच्छायाहरणपटुकायामलयशा ।
उदीक्ष्य द्रागुत्को दलितहरिमुत्कोऽप्यशिविरो,
विरोकं गोलोकं सुचिरमनुसस्मार मुरजित् ॥४ ॥
निपीयामु दृग्भ्यां प्रणयशिथिलाभ्यामविरल,
सतापं विश्लेषादतिशिशिरयन्ती स्वहृदयम् ।
कथञ्चिद्धावन्ती विगणितपरिश्रान्तिरचिरा-
दुपासीदत्सीदज्जनशरणमेषा गिरिधरम् ॥५ ॥
उपेताऽसौ वृन्दाविपिनमनुगोवर्धनगिरिं,
चतुष्कृत्वः प्रीतिद्रुतगति परिक्रम्य सहसा ।
चकोराभ्या दृग्भ्या सरसिजसदृग्भ्यामतिचिरं,
विनीताऽन्त पीताम्बरवदनशीताशुमनयत् ॥६ ॥
उपासीना दामोदरचरणपाथोजयुगल,
प्रणन्तुं नम्रास्या सरभसमुपाघ्राय नितराम् ।

१ इत ९१ श्लोकपर्यन्त शिखरिणीच्छन्द । सुरभि नामधेनु ।
२. जूर्तिर्ज्वर ।

अतृप्यन्ती भूयो नयनसलिलैः प्रीतिगलितैः,
शनैरुद्धा श्रद्धाञ्चितमतिरसिञ्चन् सुरगवी ॥७॥
तदोत्सृज्य स्वर्भ्यं त्वरितमवरुह्यापमुपने-
रुपेक्ष्यास्त्रं तूनस्तरुरिव पुरस्ताद् भुवि पतन्।
अधीरः सक्रन्दन् कृतनिकृतिदण्डोदयभया-
दकार्षीदन्वर्थं बलभिदिह सक्रन्दनपदम् ॥८॥
तथाऽवेक्ष्य क्षोणीधरकरशिखोत्तोलनबलात्,
समक्षं तद्रक्षा[१]-प्रभवमनुभाव भगवत।
भृशोत्पन्नश्रद्धः परिणतमतिः सम्भृतरतिः
प्रणीतः प्राशस्त्यादतनुत नुतिं दैवतपतिः ॥९॥
दयस्व श्रीवन्द्यो मयि करुणसिन्धो ! प्रविचर-
त्त्वदप्रत्यग्जाया-प्रबलनरमाया-परवशे।
स्वनन्ते दुर्मन्तौ कपटदृशि जन्तौ परमसा-
धुपक्षाकार्कश्य-कृतमतिरवश्यं यदयते ॥१०॥
अजानन्नेवासु मुरहर ! महिम्नामतिशयं,
त्रिलोकीसाम्राज्यस्मयपरवशोऽहं पुनरहो।
यदक्लिश्ना युष्मानपि पशुपसाधारणधिया,
तदेतन्मे चेतो बत गरुडकेतो ! व्यथयति ॥११॥
पयोदव्यन्यासाद्ध्रियति चपलेव स्थितिमहो,
यदध्यासाच्चिन्ते भजति न कदाचिद्विरतिचित्।
न सैव भूयो मे मुदमुपनिदध्यात्कथमपि,
प्रभो ! स्वर्वैरस्यैव त्रिदशविशदश्रीः परमितः ॥१२॥
अशेषै रक्षोभिः सह दितिसदर्पितनन्-
नवेक्ष्याविर्भूतः क्षितितलभरोढा करुणया।
समारोप्य स्कन्धे पतदधिपने मन्दरगिरिं,
त्वदन्यः को दामोदर ! जलनिधिं द्रागुपनयेत् ॥१३॥
प्रजा वीक्ष्याशेषाः प्रमथदलिताः सूनति-विधा,
शताङ्गन्या[२] भूमौ तदवयवनो भानुशशिनो।

१. व्रजसदनम्।
२. शताङ्गस्य।

अहीन्द्रे कोदण्डत्यभिमतशरित्वाऽसुरवधे,
पुरापूर्त्तिं नीतं पुरभिदभिलाषोऽपि भवता ॥१४ ॥
हृतं मे साम्राज्यं यदपि बलिना हन्त बलिना,
तदा तद्वा कोऽन्य पुनरुदहरिष्यन्मधुरिपो !
हरे ! तामपेन्द्रीं तनुमतनुवीर्यस्तनुतमा-
मवक्ष्यत्र क्षामे जगति यदि दामोदर ! भवान् ॥१५ ॥
स्फुरत्त्रासः कोपादभिभवितुमिच्छन्नकलुषं,
महर्षि र्दुर्वासा नृपतिलक-नाभागतनयम् ।
सदा भक्तत्राणव्यसनपरिणूतस्य भवतो,
दयालोऽमोघेन प्रखरतरचक्रेण विजितः ॥१६ ॥
रदच्छेदक्रुद्धः परशुधरमावध्य तरसा,
कटौ शुण्डाग्रेण श्लथमचरितार्थौजसमहो ।
तनूजन्मा शम्भो र्भृगुरपि गजास्योऽपि सुराभिः,
भवानेव स्थेयानखिलभुवनान्याश्वगमयत् ॥१७ ॥
महेशब्रह्मभ्या सह विहरतस्तेऽम्बरतले,
मणिद्वीपप्राप्त्या सपदि दधतः स्त्रीत्वमुचितम् ।
प्रसादादम्बाया यदुपगतशक्तेः पुनरहो,
परावृत्तं पुस्त्वं, तदिदमखिलं क्रीडनमभूत् ॥१८ ॥
पराभूयाशेषानपि सुरविशेषान् रणकला-
पटिष्ठः शूराणामुपरि परितिष्ठन् सुयशसा ।
हिरण्याक्षो रक्षो न यदि भवताऽनेष्यत लयं,
तदाऽस्थास्यद्देव ! क्व खलु भुवनेषु स्थितिरियम् ॥१९ ॥
यदेकाकी बालः कुटिलमनसो दानवपते-
र्बभूव प्रह्लादो न खलु विपयो रोपशिखिनः ।
प्रपेदे चापायं त्रुटिसुघटितं पार्षदपदं,
भवत्पादाम्भोज-प्रणयपरिणामस्तदखिलम् ॥२० ॥
हयग्रीवः शौर्य्यस्मयभरसमुत्खातविनयो,
यदाऽऽस्कन्दत्स्कन्दत्रसनतरसा त्रैदशपदम् ।
तदाकारो भूत्वा त्वमतुलितसारो बत तदा,
दयालो ! तूर्णं तं भवशमनमन्तं गमितवान् ॥२१ ॥

वरप्राप्त्या दृप्तात्प्रचुरतरसा हन्तुमनसो,
जिघृक्षोः शर्वाणीं, दनुजहतकान्माधव ! वृकात् ।
त्वमेवादौ धृत्वा द्विजवटुवपु र्बुद्धिविभवा-
दरक्षः स्वाम्दक्षक्रतुदलनविख्यातयशसम् ॥२२ ॥
समन्तात्पर्याप्तैः शशधरसवर्णैर्वत !फणैः,
सहस्रेण स्वीयाप्रतिहतविभुत्वं प्रथयतः ।
सरित्पारावाराचलपटलपूर्णावयवको,
भुवो गोलो धत्ते तव शिरसि सिद्धार्थसुषमाम् ॥२३ ॥
नियोज्य ब्रह्माणं विविधरचनायां त्रिजगतां,
स्थितौ विष्णुं, लोपे मदनदमन निर्वृतिमित ।
स्वयं गोलोकान्त र्विमलमणिनीपद्रुमतले,
तटे त्वं कालिन्द्या विगलितविराम विहरसि ॥२४ ॥
तवापूर्वं पूर्वं गजपतिपरित्राणचरितं,
रमाप्राणाधार ! श्रुतमथ न विश्रम्भयति कम् ।
परन्तु श्रीकृष्ण ! प्रथितबलिचालिच्छलमये !
परिज्ञात देव ! ग्लपयति निराशं च कुरुते ॥२५ ॥
घनश्यामाः पीताम्बरपरिवृता कम्ब्वरि[1]-गदा-
सरोजाङ्कदोभिः सुरभिवनमालाविलसिताः ।
यदैक्ष्यन्ताशेषाः पशुपशुपपोतास्तु विधिना,
तदेतत्ते पद्मारमण ! घनमायाव्यवसितम् ॥२६ ॥
त्वदालम्ब्यात्तल्ली[2] वलयवरहल्लीशललिता,
स्फुटश्यामावल्लीस्तवक-निनदल्लीनमधुपा ।
विपुलान्तर्भल्ली नवदलितमल्लीसुरभिभू-
रहो सेयं पल्लीत्रिभुवनमतल्ली ध्रुवमभूत् ॥२७ ॥
समीपे कालिन्द्या व्रजविपिनभूमिः शिखरिणी,
समन्तादेव त्वत्पदकमलमुद्रापरिचिता ।
इयं सा चक्षुर्भ्यां सकृदपि निपीता सरभसं,
परार्घहस्तोमं सपदि दवयन्ती विजयते ॥२८ ॥

१. कम्बु शङ्खः । अरि चक्रम् ।
२. 'तल्ली तरुण्याम्' इतिमेदिनी ।

विनीताक्षाः शम्पाशबलमिव जीमूतमभितः,
स्फुरत्स्वर्णोल्लेखं निकषमिव पद्मापरिवृतम् ।
चतुर्बाहुं मध्ये हृदयकमलं त्वामनुपलं,
सहर्षं ध्यायन्तः क्वचन न विषीदन्ति विषयैः ॥२९ ॥
नभो नाभेः, पद्भ्यामवनिरपि, वीजाद्घनरसो,
नभस्वन्तोऽसुभ्यो, नयनयुगलाद्भानुशशिनौ ।
मनीषाया वेधा, प्रतिघपरिणाहात्पितृपतिः,
प्रसादाच्चामर्त्याः श्रुतिजनक ! ते प्रादुरभवन् ॥३० ॥
क्व गोलोके वासः क्व च वनगुहाघोषवसतिः,
क्व देवानां मैत्री,क्व च पशुपवृन्दस्य सखिता ।
क्व रक्षा विश्वस्य, क्व च मितगवीपालनमिदं,
प्रकृत्या दुर्बोधं किमपि चरितं हन्त महताम् ॥३१ ॥
चकोराणां चन्द्रो[1] रथचरणनाम्नां दिनकरो,
मयूराणां मेघो मधुरमधुमासो मधुलिहाम् ।
निशान्तः पद्मानां शरदवसरः श्वेतगरुतां,
त्वमेको भक्तानामघदलन ! दाताऽतुलमुदम् ॥३२ ॥
स्थिता मूलाधारं भुजगवनितावद्वलयिता,
गृहीतब्रह्माध्वा विसगुणकृशा विद्युदुपमा ।
जवाद्भेदंभेदं मुरमथन ! चक्राणि चलिता,
सहस्रारस्थं त्वामनुपतति शक्तिः परशिवम् ॥३३ ॥
प्रतीपो दैतेयैः, प्रियसहचरो गोपशिशुभिः,
व्रजेशाभ्यां तोकं,किमपि खलु तत्त्वं युवतिभिः ।
कृपासिन्धुं भक्तैः,पशुभिरवकौ, बन्धुरभरैः,
शरण्यो घोषस्थैः[2]-स्त्वमसि च मतः सम्प्रतिजनैः ॥३४ ॥
निषादं[3] नागेन्द्रं ध्रुवमपि च सुग्रीवमकृश-
प्रसादादात्मीयं पदमसुलभं प्रापितवतः ।

१ दीपकम् ।
२ उल्लेख ।
३. यथा० ।

न ज्ञाति र्नो विद्या नच खलु वयो नैव विभवो,
विना प्रेम श्रीमन् रुचिविषयतामेति भवतः ॥३५ ॥
सहस्रास्यः कृत्स्नानपि गणयितु यद्गुणगणा-
नुपक्रम्य श्राम्यन्नुपरतपदो मूर्छति चिरम् ।
अहज्ञाप्यो विभद्विकचन यनानां दशशती
यदालोके वर्ते, स किल भगवान् सम्प्रति गतिः ॥३६ ॥
जगत्पारावारे बहुविषयकल्लोलतरले,
निमग्न व्यत्यासप्रणयिविधिखेलानुसरणात् ।
महामोहग्राहे ग्रसति गतिहीन जनमिमं,
त्वमेकः सर्वात्मन्नवितुमुपसन्न परिवृढ ॥३७ ॥
रसन्नुच्चै र्घोर विपुलकरक वारि विसृजन्,
गदादिष्टः कोपादविरतमदोवारिदगण ।
प्रभावात्ते स्थाने व्रजप ! विफलीभावमभजत्,
समूह खद्योत परिभवितुमीष्टे क्व तपनम् ॥३८ ॥
भवन्तं विश्वस्य प्रभुमपि सहस्रेण नयनै-
रहं पश्यन्नेर्ष्या-कलुषितमना पर्यचिनवम् ।
प्रसक्तेर्ष्याराग पुरुषमवधार्येत तिमुखी,
चिरामन्त्राऽप्यस्मादपसरति रोगादिव मति ॥३९ ॥
त्रिलोकीसम्राज कुलिशदलितारातिनिवह,
प्रभुं गीर्वाणानाममितबलमात्मानमवयन् ।
यदागस्तेऽकार्ष मधुदलन ! चित्र न खलु त-
न्न मूढानां स्वान्ते विलसति विवेकोऽपि कलया ॥४० ॥
भवारण्ये भीमे श्रुतमचिवधीमन्त्ररहितं,
मुहुरश्रान्तं दम्भद्रुमशिखरमारूढमचिरात् ।
परामर्शादासादितपरिसरं हन्त ! पुरुष
दरात्यन्तर्लीना परुषतरमीर्ष्याविषधरी ॥४१ ॥
प्रमत्तस्यैश्वर्यादगणितवतस्त्वामपि विभुं,
मम स्तम्भध्वसः परिणतिशिवोऽयं समुचितः ।
स्थितो व्यासक्तानां जगदधिप ! जागर्तीह सदा,
नियन्तॄणां दण्ड कुपथचलितान् सङ्गमयितुम् ॥४२ ॥

अयाराते ! युष्मन्महिममिहिरश्लक्ष्णमहसा,
मम स्वान्तध्वान्तप्रकरमभिभूय प्रसरता ।
वियोगेन ग्लानिं भृशमनुभवन्तावतिचिरा-
दहो चक्रौ चक्रोज्ज्वल ! मतिविवेकौ सुघटितौ ॥४३ ॥
इदानीं त्वल्लीलाव्यतिकरसमीक्षापरिणमत्-
प्रबोधस्य प्राज्यानुशयकतक[१]-स्वच्छमनस ।
जगद्व्याजालक्ष्यं चिरपरिगृहीतं पुनरहो,
सुखाय श्रीमन् ! नो भवति सुरसाम्राज्यमपि मे ॥४४ ॥
प्रसीद त्वां ध्यायन्नपि जगति चेन्नन्दति जन,
पुन साक्षात्कुर्वन् कथमथ भवेयं न मुदित ।
अविन्द तन्मन्दं फलमिदमशेषस्य भगवत्-
तिरस्कारस्याद्धा भवशमन ! मन्तोरनुशयात् ॥४५ ॥
प्रमाता वेदाना स्फुरितबहुविज्ञानविभवो,
विधाता लोकानामपि यदि विमूढ स्वयमभूत् ।
सदासम्पद्व्यालीपरिमिलनशालीन-मतिक-
स्तदा कोऽहं मोहं यदिह न वहेय त्वयि विभो ! ॥४६ ॥
भवाटव्या भ्राम्यस्तुलितमृगतृष्णाननुपद,
प्रभो ! श्रान्त कामं बहुविषयभोगाननुसरन् ।
कृपाच्छायासान्द्र प्रकृतिशिशिर त्वा विटपिन,
कथञ्चित्सम्प्राप्य प्रमदमयते जीवपथिक ॥४७ ॥
विभाव्य त्वल्लीलामहह गलितभ्रान्तिरधुना,
प्रभु र्नास्मि ज्ञातुं व्रजजनतपस्यापरिमितिम् ।
श्रुतीना तत्त्व ये पशुपशिशुवेष परिसरे,
सदा त्वा पश्यन्त क्षणमिव नयन्ति स्वसमयम् ॥४८ ॥
अपूर्वा सम्पत्ति-[२] स्तव जयति दूर्वादलरुचे-
रहङ्कार स्फार पुनरनुपलं मुञ्चति न माम् ।
बिभर्षि त्वं विश्व गुरुतरमतिस्स्व मम तु तत्-
परिश्रान्त स्वान्त भवति कमलाकान्त ! किमिदम् ॥४९ ॥

---

१. जलनिर्मलीकारकद्रव्यन्तत् ।
२. अमद्गति ।

पदं रम्यं स्वर्गं त्रिभुवनविभुत्वं निरवमं,
शची साध्वी पत्नी, सुतमपि जयन्तं विनयिनम् ।
अमोघं मे चास्त्रं कुलिशमयि ! विश्राणितवत,
कथं ते श्रीजाने ! मम सुमतिदाने कृपणता ॥५० ॥
जगच्चक्रारूढं घटमिव कुलाल: प्रतिपलं,
निरालस्योऽवश्यो भ्रमयति भवानीश ! कुतुकात् ।
तदस्मिन्नस्वैरी ततसुमतिवैरी नरहरे !,
कथङ्कारं सारं कलयतु जनो भ्रान्तहृदय ॥५१ ॥
विभात व्यामोहव्यतिकररजन्या: सुखमय
प्रबोधोऽवष्टम्भप्रबलतमतन्द्रे[१] रविपमः ।
प्रवाहोनिर्बाध प्रणयघनपीयूषसरितो,
भवत्साक्षात्कारो मम सुकृतसारोपगमक ॥५२ ॥
अवन्ध्या मे यागा नियतिरतिसाम्मुख्यसुभगा,
सनाथं विज्ञानं, त्रिदशगुरुसेवाऽद्य फलिता ।
यदेतत्त्वद्रूपं श्रुतिभिरसुरूपं वत चिरा-
दहं साक्षात्कृत्य क्षतकुसृतिनृत्य: खलु रमे ॥५३ ॥
तिरस्कुर्वन्नम्भोधरहरिमणीन्दीवररुचिं,
गुणानाय:[२] काय: कलयति तमालस्य तुलनाम् ।
तथाऽयं ते राजञ्छिरसि शिखिपक्षोऽतिशबलो,
बलात्सत्यासक्ति क्षिपति विपर्येष्वङ्ग ! मनस ॥५४ ॥
अतृप्यद्रक्तालीमधुपकुललिप्संक-विषयो,
निराकुर्वन्देवद्रुमकुसुमनैसर्गिकमदम् ।
प्रभो ! त्वत्सान्निध्यादपरिचितपूर्वो मम मन-
प्रसादं स्थेयांसं सृजति वनमालापरिमल ॥५५ ॥
प्रसिद्धो लुण्टाको व्रजयुवतिधैर्यातुलमणे-
निदान केकाया: कलुषतिमिरौघस्य तरणिः ।
उपादानं प्रीतेरतनुमनुजेन्द्रस्य च मनुः,
श्रुतश्चेतो वेगान्मम हरति वंशीकलकल ॥५६ ॥

१ रेनु ।
२. गुनायो जालम् ।

पुरो गव्या[१] भव्या शिरसि शबलं पिच्छमुकुटं,
गले गुञ्जामाला, मृदुवसनमसे कनकभम् ।
करे वंशी, पार्श्वे सखिसमुदय, केशव ! तव,
प्रतिच्छायातीता छविमविरल पल्लवयति ॥५७ ॥
पयोदान्तर्वर्निक्षणरुचिविलासस्मयहरः,
सनाभि नीलाश्मच्छुरितहरितालस्य सुतराम् ।
समावृण्वन्नङ्गं प्रणिहितमनोवृत्तिविषय,
पटस्ते न काम जनिमृतिविराम वितरतु ॥५८ ॥
अहोरात्रानेता[२] -नहह मृदुलोऽपि क्षितिधरं,
निरायास देधे जगपतिकरो माल्यमिव य ।
स कल्पद्रुदङ्खत्रवविटपशोभापरिचितो,
भुजोऽय ते वामोऽप्यग्रदलनदक्षो भवतु मे ॥५९ ॥
जपारागग्रेङ्खन्महिममहनीयाङ्गुलिदले,
शरद्राकाधीशोज्ज्वलनखमह केसरवृते ।
पदाम्भोजे भक्तव्रजहृदयभृङ्गोपचरिते,
तवास्मत्ससारज्वरपरमशान्त्यै प्रभवताम् ॥६० ॥
यया वेर कुर्वन्नपि सकरुणोदार्यभृतया,
खलो दारान् हर्ता स्वपदमुपनिन्ये दशमुख ।
त्वमुद्धर्तुं मोहस्खलितमनस मामशरणं,
दृशा ता दैत्यारे ! पुनरपि समुन्मीलय मनाक् ॥६१ ॥
यया मीनादीरप्यतनुत तनू र्नूनमसकृद्,
विपक्षैर्व्यायस्ता-नुचितमुपकर्तुं सुमनस ।
तयैवाद्य श्रीमन् ! सहजकृपयाऽरुन्तुदमिद,
मदांगो वालिश्योद्धवमिति भवान् किंनु कलयेत् ॥६२ ॥
निदान देवश्रीपरिचितनतृणोभगहने,
पुरावृन[३] लोके कलुषमभित ख्यापयदहो ।

---

१ गोवृन्दम् ।
२ मत्र ।
३ अहल्याधर्षध्वमनम्पम् ।

सहस्रं नेत्राणां मम पुनरिदानीं तव विभो !
यथाकामं रूपव्यतिकर मिहालोक्य सफलम् ॥६३ ॥
अभिद्रुह्यन् मुह्यन्नतिरतितरस्त्री सकपटो
मुरो यस्यामर्षज्वलदनलकच्छत्वमगमत् ।
विधूयांहोदोष निरवसितितोष प्रबलयन्,
स गोपालीपाली वसतु वनमाली मनसि मे ॥६४ ॥
वमन् वृन्दाटव्यां परिदधदमन्दाजिनमह,
पिबन् वा कालिन्द्या किमपि तनु कन्द कवलयन् ।
विहातु स्वच्छन्द जनिनिधनसन्दोहमचिराद्,
भजेय सानन्द निरुपधि मुकुन्द प्रतिपलम् ॥६५ ॥
तथा पद्मावन्धो ! सकृदपि कृपाप्लावितदृशा,
भृशागोभि र्भीतत्रपितमनुकम्पस्व भगवन् ।
यथाऽय दासस्ते पदयुगलपङ्केरुहमधु-
द्विरेफः स्याद्दीनावनपर ! परस्यामपि जनौ ॥६६ ॥
इति प्रेम्णा स्तोत्रस्रजमभिनवा गुम्फति चिराद्
वलारातौ वेलोच्छलित-करुणासिन्धुलहरि ।
मित सत्य सार परिणतिहित ह्यमतुल,
प्रसह्य व्याहार्षीद्वत !सपदि गोवर्धनधरः ॥६७ ॥
न कोपान्न द्रेपान्न दुरभिनिवेशान्न कपटा-
न्न चाकस्मादेव त्रिभुवनपतेऽहं विहितवान् ।
परन्त्वेतत्सर्व हरिहय ! मयाऽचीकरदिय
स्वतोलब्धोल्लासा त्वयि पशुपवृन्दे च करुणा ॥६८ ॥
न यस्मान्मद्भेदं भजति जगदाविद्यिकमिद,
ममेहांशो मन्योरपि न शतमन्यो ! भवति तत् ।
उपायैरस्तोकैरपि सुरपते ! दाहविरहे,
प्रभाशीलं शीलं वहति न कदाचिद्घृतवह ॥६९ ॥
ममाश्रान्तं जीवान् विपदुदधिमग्नान् कलयतो,
न च द्वेषो रागैरविदिततरस्य प्रभवत. ।
कुनिर्बन्धग्रव्याजो कथमथ लभेतामवसरं,
न वाऽकस्मात् प्राज्ञः क्रिमपि विदधे मूढजनवत् ॥७० ॥

महासाम्राज्याप्ते स्फुरति मदनीहारपटले,
पराङ्मुख्यम् यत्त्वं प्रभुमपि न मां पर्यचिनुथाः ।
तदेतत्त्वद्भूतिं ध्रुवमभिभवेदित्यनुभवन्,
परीभावान् प्रज्ञातरणिमुदयं ते समनयम् ॥७१ ॥
मदेकायत्ता ये प्रकृतिसरला शक्र ! पशुपा
भवद्यागत्यागे लवमपि वितर्कं न विदधुः ।
ममोक्त्यैवापन्नां विपदमतितीव्रां पुनरहं,
कथं तेषां जोषं प्रभुरपि सुराधीश्वर ! सहे ॥७२ ॥
शुनासीर ! क्रूरो लघुपरिगृहीतो द्रुतमहो,
ध्रुवं सम्पत्सर्पो गरलमिव दर्पं वितनुते ।
विषादं मागास्तत्, तदुपशमनार्थं व्यरचि यद्,
विचित्रेयं लीला, क्षतिरपि मुदे ह्यायतिसुखा ॥७३ ॥
क्षमावेणीमग्नं हृदयमृगमीर्ष्यादवशिखा,
न तावत्तीव्राऽपि ज्वरयितुमहो पारयति यत् ।
ततः शङ्कापङ्काविलमखिलमन्तःकरणकं,
विधत्स्वाद्य शुद्धं शतमख ! समाधानसलिलैः ॥७४ ॥
मखध्वंसं श्रेयःफलकमिह निर्णीय सुतरा-
मदत्त्वाऽन्तः स्थानं नियमितधृति ज्वलथ रुषे ।
अवज्ञाने मानेऽपि च सदृशमेव व्यवहरन्,
सुखं भूयो वज्रिन्नुचितमनुशाधि त्रिभुवनम् ॥७५ ॥
न मानो नावज्ञा प्रभवति यदन्तः कथमपि,
प्रसीदतु सुत्रामन् ! सुखमथ च दुःखं समदृशाम् ।
अतस्ते निर्द्वन्द्वा भृशमनुभवन्तः शमसुखं,
समेषां जन्तूनामपि दधति निश्छद्मसखिताम् ॥७६ ॥
इतीमाः सम्प्राप्ताः श्रुतिविशदवीथी-पथिकता
चिरं स्मारं स्मारं गिरिधरगिरः सम्मदकिरः ।
स्वमन्तर्ध्वं धुन्वन्ननुशयमनौचारयमुग्रं,
बभूव प्रत्यग्रप्रसृमरमुखश्रीः, शतमखः ॥७७ ॥
दृशा राशिं मोदप्रणयपरिणाहाद् विकसितं
सितं राजीवानामिव निकरमारोप्य पदयोः ।

दयोदारं वशोधरमतुलसारं ह्लमदो
नमश्चक्रे कृष्णं क्षपितभवतृष्णं सुरपतिः ॥७८ ॥
तदाऽपत्यैः साक्षात्कृततदनुभावैरनुमता,
मता देवैं भूय परिचय-लसत्साहसरसा ।
त्वमस्माक विश्वेश्वर ! सकृपमङ्गीकुरु गवा-
मिहेन्द्रत्व श्रीमन्निति सुरभिरूचे मुरभिदम् ॥७९ ॥
प्रणम्योरुश्रद्धः सरसविकसद्वक्त्रकमल
पुरस्तिष्ठन् बद्धाञ्जलिरवहिताशेषनयनः ।
अवोचत् पौलोमीपतिरपि तदा दैवतगवी-
गिर पोत्वाधीर हरिमुपगताभीरवपुषम् ॥८० ॥
प्रभो ! याच्ञामेता सदयमुररीकृत्य सुरभे-
र्वहन् रक्षाभार समुदयमथानन्दय गवाम् ।
यथा गोविन्देति त्वदतिमधुराख्यां प्रणिगदन्,
निरायास छिन्द्यात् सपदि यमपाश वत जन ॥८१ ॥
गवामिन्द्रत्व त्व निजमनुमनुष्वेति सुतरां,
त्वयि त्रैलोक्येशे यदपि वचनीय ननु वचः ।
अमूषु प्रेमाणं स्फुटमपरिमाणं तदपि ते
विचिन्त्यानौचित्य गणयति न चेतो मम विभो ! ॥८२ ॥
न तच्चित्रं तस्मादिह यदनुरोधेन हि तयो-
र्मुदा गोविन्दत्व त्वरितमनुमेने मधुरिपुः ।
यशोदायाः प्रेम्णा नियमनमपि स्वीकृतवता
पुरैव प्राकाशि प्रियजनवशत्वं यदमुना ॥८३ ॥
तदा तत्सम्भारं सपदि समगृह्णाद्बलरिपुः,
करेण स्वर्गङ्गा· सलिलमुपनिन्ये ऽभ्रमुपतिः ।
तथा प्रत्यासीदद्बहुभिरुपदेवैरनुगत,
शचीमुख्यो विघ्नक्षपणकुशलो मातृनिसरः ॥८४ ॥
परेभ्यस्तीर्थेभ्यः कनकमयकुम्भैश्च सलिलं
नियुक्ताः सरक्ता द्रुतममितमानिन्युरमराः ।
निदेशे माहेन्द्रे भगवदभिषेकोपकरण-
व्रजप्रत्याहारं क्षणमपि विलम्बेत खलु कः ॥८५ ॥

समाजह्नुर्वस्तून्यहमहमिकाऽऽक्रान्तमनस
प्रतीक्षन्ते न स्म प्रतिविषयमादेशमपि ते ।
निदेशाना भर्तुः प्रतिपदमपेक्षामपटवो
विधूतोहा प्रायो विदधति हि कार्येऽपि विदिते ॥८६ ॥
स्वभावान्मङ्गल्य विविधमथ तौर्यत्रिकभर
वितन्वत्सु प्रीत्या रुचिरमुपदेवेषु परितः ।
गुरो पौरोहित्यं वहति च विधिज्ञे विबुधराट्
प्रसन्नात्माऽन्वस्थात् प्रकृतमभिषेक भगवत ॥८७ ॥
हसद्भि पीयूष शुचिमधुरतागर्वि सुरभे
पयोभिर्दैत्यारेः शिरसि निपतद्भि विरचितम् ।
स्फुट पाथोराशेरुपरि घनभासोऽनुमिलता-
महो काम्य साम्यं निविडतर-राकेशमहसाम् ॥८८ ॥
अथापृच्छ्य प्रीत्या त्वरितमभिषिक्त परिलसत्-
प्रसाद गोविन्द स्खलितविशय सस्मितमुख ।
नमन् भूयोऽभूयोदयकलुषशान्त्यं सुरपति-
र्दधानस्तद्रूप हृदि निरभिमान स्वरगमत् ॥८९ ॥
महासारोत्पात करशिखरशैलेन्द्रवहन
गतावष्टम्भस्य प्रणिपतनमारान्मघवतः ।
प्रयाणं चावेक्ष्य क्षपितविशया गोपशिशवो
महिम्नामुग्राणां निधिमकलयन् नन्दतनयम् ॥९० ॥
कृष्णाभिषेके गमितेऽवसान, सानन्दमासाद्य तदभ्यनुज्ञाम् ।
सहानुगत्र्योमचरं यथास्व, जगाम धाम प्रति कामधेनु ॥९१ ॥
मुकुन्देऽभिषिक्ते दिगन्ता प्रसाद, ग्रहाभासमाकाशदेशा प्रकाशम् ।
विकास लताश्चाप्यनायासमन्य
द्रुहो नाशमासादयामासुराशु ॥९२ ॥
निर्मलं मुमुचुरम्बु वारिदा, मन्थरा सुरभिवायवो ववुः ।
मानसानि जहृषुस्तरां सता, धापदाश्च विजहुर्नृशंसताम् ॥९३ ॥
उल्ललास द्रुतं सस्यं, प्रशान्यं समलङ्कृता ।
गोविन्दचरणाम्भोज-रज पूततरा धरा ॥९४ ॥

स्वयमनुलोमविधिप्रणोदितैरुदितदर्यैर्दिविपद्भिरर्पितम् ।
प्रियमधिगम्य मुकुन्दमीश्वरं निरतिशयं च ननन्द गोव्रजः ॥९५ ॥

व्रजराजसुतो दिवस्गते व्यवसाय विनयेन पेशलम् ।
प्रणयं च विचिन्त्य विस्मितः सुहृदां
मण्डलमुत्सुकोऽविशत् ॥९६ ॥

ततोऽनुरागशालीनि दैवतानीव वासवम् ।
मित्राणि प्रीतिपात्राणि, पर्यवृण्वत केशवम् ॥९७ ॥

तत्रावगत्य माहात्म्य सखीनां स्तुवतां भृशम् ।
वचोभिः सङ्कुचन्नम्र, श्रीकृष्णो व्रजमाव्रजत् ॥९८ ॥

पितरौ विजितेन जिष्णुना, विहित विस्मयिनौ सुतस्तवम् ।
अवगम्य तथा चिरं पुनर्दधतु कृष्णमहत्त्वसंस्तनम् ॥९९ ॥

अथ 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रथी-'विद्यानाथ'-प्रभव-'बदरीनाथ'- रचितः ।
रसोदग्रो-राधापरिणय-महाकाव्यनटको
वृहद् वृत्त[1] सर्गस्त्रिशुचिशशिमितः पूर्तिमगमत् ॥१०० ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के वासवस्तयो नाम त्रयोदशः सर्गः ।*

१. वृहद्वृत्त छन्दो यत्र सः । त्रिशुचिशशिमितस्त्रयोदशः ।

*॥इति प्रभाया त्रयोदशः सर्गः ।*

# अथ पूर्वरागप्रसङ्गो नाम
## चतुर्दशः सर्गः

आशिख विकचयन्नथ कुन्द,[1] कोरकैश्च नमयन्मुचकुन्दम् ।
उल्ललास शिशिरोऽर्चिमुकुन्द नन्दको विपिनसीम्नि मुकुन्दम् ॥१ ॥
केलिघर्मपृषतामपहर्ता, सीत्कृतिं विपुलयल्ललनानाम् ।
कल्पयश्च परिरम्भदृढत्व, सत्कृतिं भृशमवाप स यूनाम् ॥२ ॥
दैर्घ्यभाजि रजनावविराम, विश्रम निधुवन विदधाना ।
माधवादपि बहु शिशिरर्तौ, पक्षपातमभजन्त युवान ॥३ ॥
धेनुदोहचलवत्ससमूह-स्थानमेदुरमुदञ्चितदीपम् ।
शैशिर तरुणमोदि नवोढाऽऽसतङ्कारि रजनीमुखमासीत् ॥४ ॥
चित्रमत्र विरहादबलाना,ताम्यत समुदयस्य निहन्त्री ।
रात्रिरुन्नतिमवाप, दिन त्वा-श्वासकार्यपि परा क्षतिमागात् ॥५ ॥
मासलत्वमवलग्नविलग्नं, यौवते स्तनतटीव कठोरा ।
यामिनी किमु बलाम्मलिनेह, द्राघिमाणमहरह्दिवसीयम् ॥६ ॥
नैकधा निशि वितत्य यथेहं, कान्तयोरविरत रसमुर्व्यं ।
श्रान्तयोरपि कृतोत्कलिक स्राक्, प्रेष्ठमास्त तुहिनर्तुविभातम् ॥७ ॥
शामनस्थितिमवेत्य कराला, विप्रयुक्तरमणीनिकुरम्बे ।
दुर्विनीतशिशिरस्य सुशील, साध्वसादिव कृशो दिवसोऽभूत् ॥८ ॥
शाश्वतव्ययरतस्य दयालो, र्दुर्विधत्वदलितस्य वपुर्वत् ।
क्षीणतामनुपल शिशिरस्थ, प्राप भूरि बत वासरवृन्दम् ॥९ ॥
सापराधवृधचित्तमिवाह, सञ्चुकोच विमल शिशिरर्तौ ।
बालिशव्यसनलोलुपतेव, स्वैरिणी च ववृधे बहु रात्रि- ॥१० ॥
वीतरन्ध्रतिमिर प्रथयन्ती,रुन्धती विचरण च जनानाम् ।
तामसी मसिनिभाऽभिसृताना, प्रेयसी शिशिरगर्भगताऽभूत् ॥११ ॥
वेपमानमतिशैत्यवशेन, स्थापयन् हृदयमाशु कुचोष्मा ।
प्रेयसेऽभिसरता व्रजबाला-मण्डलेन शिशिरेऽभिननन्दे ॥१२ ॥
भूतिमानृतुपति विजिगीषु, कौशलेन शिशिरो नयनिष्ण
कैतवेन परितो हिमराशे, र्व्यासयेन्दुवि यशश्शशिशुभ्रम् ॥१३ ॥
सन्ध्ययोरधिनिशञ्च कथचित्, पीड़ने प्रभुरभून्न हिमानी ।
गोदुहा प्रचयमामपि घोषे, यत्करीषदहनो न दुराप ॥१४ ॥

---

१. इन ९७ श्लोक यावत्स्वागताच्छन्द ।

शीतरश्मिमहसो रवितेजश्चन्दनस्य दहनोज्ज्वलकील ।
ग्रीष्मकल्पितशरीमतिमात्रं, हृद्यतापमजहार हिमर्तौ ॥१५ ॥
या सुधामिव निपिव्य जनानां, कौमुदी शरदि शर्म वितेने ।
हन्त ! सैव शिशिरे प्रथयित्वा, वेपथुं पुरुमनिर्वृतिमाधात् ॥१६ ॥
सान्द्रपीवरकुचोष्मजुषोऽपि, प्रायशो युवतयो हिमधाम् ।
तावदापु रभजन्नहि यावत्, कान्तगाढभुजपञ्जरबन्धम् ॥१७ ॥
मानधृतविनया शयनीय-स्यायिकान्तमपहाय कृशाङ्ग्य- ।
भूमिपृष्ठमधिशय्य च[१] तूष्णीमन्वशेरततरापुरुकम्पा ॥१८ ॥
केलिकुञ्जमवलोक्य निशीथे, प्रेयसाऽनुपसृत कृशगात्री ।
आधिनाऽन्तरिव भूरि हिमान्या, चिक्लिशे बहिरनीहतमाऽन्या ॥१९ ॥
सम्प्रधार्य दयितागमवार, सम्मदं - प्रथिमभाग्भिरमान्ती ।
सञ्जिते च शयनीयतले नो - शारसारमबला निदधौ प्राक् ॥२० ॥
जाड्यजागरजवेपथुचक्षु-रागमागतमवेक्ष्य विलक्षम् ।
कान्तमन्तरितरुद् पटसारैरावृणोदुपसि काऽपि हसन्ती ॥२१ ॥
वल्लभो हिमनिशो दयितायाः, केलिभि सफलनाय विचित्रै ।
किं ययावितरथा न विलम्ब्य सम्भवीति विममर्श च काचित् ॥२२ ॥
स्वानुसारिणि सदा हृदयेशे, शैशिरी श्रियमल दवयन्ती ।
अञ्जसाऽभृत मद मदिराक्षी काऽपि कापिलगतप्रकृते द्राक् ॥२३ ॥
आर्द्रयिष्यदचिरेण तुषारो मारजर्जरतर तरुणीघम् ।
कामिनीघनकवोष्णकुचोप-श्लेषमेप शरण यदि नाप्स्यत् ॥२४ ॥
विप्रयुक्तयहुदुस्सहदुःखं, हा समीक्ष्य शुचिरस्तकलङ्का ।
चन्द्रिका प्रकृतिसिद्धमपीत किं प्रसादमतिसादमहासीत् ॥२५ ॥
अप्रसादमपि बिभ्रति चन्द्रे, भर्तरीव वनिता सुचरित्रा ।
नाचिकृक्षदनुराममनीचं, शैशिरापदि चकोरकिशोरी ॥२६ ॥
सोपधानमृदुलोज्ज्वलतूल-स्थूल-सस्तरवरावरणाढ्यम् ।
प्रीतिहारिरमणीरमणीयं, तल्पमाप्य मुमुदे निशि धन्यः ॥२७ ॥
कामकश्मलभृतो घनकाल, ज्योतिरावरणकृन्मिहिकाऽलम् ।
मेनिरे विरहिणो हिमकाल, स्वाञ्चिरांसुमिव घस्मरकालम् ॥२८ ॥
क्रीडनोपरतकामुकयुग्म-स्वान्तभू-दहनदीपकतायाम् ।
मालयादपि पटुः खलुवायोः, शैशिरोपसि हिमालयजोऽभूत् ॥२९ ॥

१. इतो नायिकाभेदवर्णनम् ।

निर्भरं तुहिनपातनिदाने, वाति वैश्रवणदिक् पवमाने ।
सत्वरोद्यदधरव्रणजाला, का न हन्त दुदुवे व्रजबाला ॥३० ॥
आश्रवं प्रभवतस्तुहिनतों, निर्दयस्य नितरां पवमान- ।
वेपयन् विरहपीडितबाला-चक्रवालमभवद्धतमानः ॥३१ ॥
मारुते तुहिनशीकरवर्षे, विप्रकर्षमधिकं नयतीनम् ।
दुर्दिनान्यपि मुकुन्दमुखेन्दो, र्दर्शनेन सुदिनानि बभूवुः ॥३२ ॥
वायुना हिमदरीजनिभाजा, वेपथुं ननु पृथुं गमिताया ।
चित्रभानुरिव भानुरिहाभूत्, प्रीतिभूमिरधिकं जनताया ॥३३ ॥
जातवेदसमसन्तमपीपत्-सङ्गमं क्वचिदवाप्य तदीयम् ।
अन्वमापयदिहोपसि भूयान्, वाष्पराशिरुदयन्नुदपूरात् ॥३४ ॥
प्रायशोऽनुभवतामितरत्र, क्लेशमुज्ज्वलतरे स्थविराणाम् ।
दुर्दिनेपु सुतरां पशुपानां, कृष्णवर्त्मनि बभूव महास्था ॥३५ ॥
मञ्जुलानलपरिष्कृतशाला, भावभङ्गिभरभासुरबाला ।
कुन्दकोरककडम्बितमाला, भेजिरे च रसिकाः पशुपालाः ॥३६ ॥
ग्रीष्मभीष्मतरतापकरोऽभूद्, भानुमानिह हिमेन मनोज्ञः ।
जायतेऽतिविभवोद्धतकृत्यो, निस्स्वतानुभवनेन विनीतः ॥३७ ॥
ऊर्जितं हिममवेक्ष्य विपक्षं, बाधितुं प्रयतनोऽप्यसमर्थः ।
लज्जयेव गलितातुलतेजा, भास्करो ध्रुवमनूष्णतरोऽभूत् ॥३८ ॥
कान्तिसारभरेण लसन्त्या, वल्लवीवदनपङ्कजराजौ ।
व्यर्थमेव शिशिरेण सरोपं, मर्दितानि नलिनानि समन्तात् ॥३९ ॥
आशुनिष्कमलतां गमितोऽपि, व्यक्तमुन्नतहिमेन मनस्वी ।
स्वानुभावमवधृत्य तटाकं, पाथसा सकमलत्वमवाक्षीत् ॥४० ॥
अद्भुतं तदभवद् यदयुक्ता, मन्मथानलशिखावृतकायाम् ।
अप्यजस्रमवतामनिनीव्र, जाड्यमत्र सुचिराय पराभूत् ॥४१ ॥
यत्समत्वमिह दाहकताया, वीतितीव्रहिमयो र्महदासीत् ।
चित्रमेतदतिचित्तमचुम्बत्, कूपवारि जड़ता च जहौ यत् ॥४२ ॥
प्रातरावृततनुस्तुहिनेन, स्थेयसा वहुघनेन पुरस्तात् ।
मन्यते स्म सरलं पशुपैर्गोवर्धनोऽपि शशिशेखरशैलः ॥४३ ॥
यत्रिकामहृदयङ्गममम्भश्शैत्यनव्यतिक्रमस्य पुराऽभूत् ।
हा तदेव शिशिरे हिममद्राद्, दुस्पृशाभृशमरुन्तुदमासीत् ॥४४ ॥
व्योममध्यमधिचुम्बति भानौ, किं यथेच्छमवगाहनयोग्यम् ।
वापिकाम्बु शिशिरे वरसानां, चेननस्य वत कस्यचिदासीत् ॥४५ ॥

उद्वदुग्धाकरसोदरशोभं, नागरङ्गफलमाहितलोभम् ।
कामुकाकलितकुङ्कुमलेपं, गोष्ठ्यां तकपोलमजैषीत् ॥४६ ॥
किञ्चिदुन्मिषति कालिकपाके, स्निग्धपाण्डुबदरीफलपश्यः ।
प्रोषितः स्मृतकलत्रकपोलश्चुक्षुभे कुसुमकार्मुकवश्यः ॥४७ ॥
पाकमाकलयत फलराशेः, पाण्डिमानमसमानमवाप्ता ।
प्रोषितप्रियकुलीनमृगाक्ष्या, स्पर्धयेव लवली विजजृम्भे ॥४८ ॥
उच्छ्रितो विजयिनो विषमेषोश्वेतकेतुरिव काननदुर्गे ।
कौमुदीविशदकौसुमराजी, राजतेस्म बहु शाबरशाखी ॥४९ ॥
योऽफलापि फलिनी, विकचान्ता, गन्धवासितसमस्तवनान्ताम् ।
पीडितोऽपि तुहिनाद्गरविन्द, प्राभवद्गहयितु न मिलिन्दः ॥५० ॥
अर्दितेऽप्युपवने हिमपातादेकलो मरुवको विकचोऽभात् ।
दुःस्थितेऽपि जगति क्षययोगात्, केवलो लसति नृत्यकृदुग्रः ॥५१ ॥
पाटले चटुलपाटवगोधुक्-चित्तदन्तबहुचर्वणतृप्ति ।
गोष्ठमण्डलममण्डयदागात्, पुण्ड्रदण्डपटले रसपूर्त्ति ॥५२ ॥
मौक्तिकाभहिमबिन्दुवतंसं, बालभास्करकरोत्करकीर्णम् ।
सैकते नवयवाङ्कुरजालं, कस्य कौतुकमसूयत नालम् ॥५३ ॥
शैशिरीं श्रियमवेक्ष्य समग्रामुष्मजं क्वचन मङ्क्षु निलीनम् ।
क्षुल्लकैः खलु खलैर्नरनाथा-स्थशास्तिमिव कर्कशरूपाम् ॥५४ ॥
शीतभीतिमवमत्य मदोष्म-ध्वस्तधीरुधिरभासुरनेत्रः ।
अभ्रमद् भ्रमरभः परिभावी, वाजिनामुषसि सैरिभराजः ॥५५ ॥
उन्मदोऽसितमणिप्रभलोलद् भृङ्गपालिपरिवीतकपोलः ।
कानने मुकुलिताननकोशां, वासितामनुससार करीन्द्रः ॥५६ ॥
कुर्वचिद्गजपतेर्गतिभङ्गी, वृंहितं स्तनितमासलधीरम् ।
उन्नता स्थिरतराऽपि च दृष्टि, गर्वकर्बुरमवोचत चेतः ॥५७ ॥
धूम्रः परिसरे विपिनस्य, क्षीणतामनुभवन् सकलत्रः ।
उल्बणाम मृतनूपरिणाह, पल्वलानुसृतदेश वराहः ॥५८ ॥
सर्वतः स्फुरति केशरगन्धे, बन्धुरे विचरतो विटपौघे ।
मांदतोऽपि च हिमादलिरारोरासाद मुखलम्ब निनादः ॥५९ ॥
ईश्वराविरभवन् सहकारे, कोरकोऽथ च पिके कलनादः ।
कम्पनिर्वसनदुर्गतकान्ता, मूर्च्छयत्रनुपदं शिशिरान्तम् ॥६० ॥
तावदीपदुदियाय निसर्ग-श्रीनिधौ वपुषि चोपसुधांशोः ।
वल्लवीवलयमानसकक्षो-ल्लासको ललितयौवनभानुः ॥६१ ॥

प्रायशोऽजनितरामतिवेलः, कल्पिताधिकुचराननमुद्रः ।
लब्धवृद्धिसमय समय श्री-भोजभूपरिपुरूपसमुद्रः ॥६२ ॥
ईषदङ्कुरणभाजि युवत्वे, सा निसर्गरुचिराऽपि मुरारेः ।
आतनोत्तनुरनुक्षणमुच्चैरन्यमेव सुषमापरिणाहम् ॥६३ ॥
शीतलीकृतनिभालकनेत्रा, नन्दमुज्जलधिवृद्धिविधात्री ।
श्रीनिवासघनसहननश्रीश्चन्द्रिकेव परितोपि चकाशे ॥६४ ॥
प्रावृषेण्यगिरिनिर्झरिणीव, प्रावृधत् पुरुजवेन निकामम् ।
चक्रचङ्क्रमपरा नवजाग्र-त्तारुणोक-मुरलीधरकान्तिः ॥६५ ॥
वीतबाल्यमुरजित्तनुशोभा-माधुरी निरवधिः कुसुमेषोः ।
घोषवासितरुणीगणचेतो द्राग्वशीकरणसादनमासीत् ॥६६ ॥
का न काननपथेन चलन्त, वेणुमीडितगुणं रणयन्तम् ।
नन्दनन्दनमवेक्ष्य ललामा, शून्यमाधित मनो व्रजवामा ॥६७ ॥
यौवन प्रथम सस्तवभाजा, गोष्ठ सारसदृशा रसगोष्ठ्याम् ।
नन्दसूनुगुणवर्णनमेव, स्वैरविश्रमकथाविषयोऽभूत् ॥६८ ॥
ताभिरेव किल कालकलाभिः,[१] कीर्तिजाऽपि गुणविश्रुतकीर्ति ।
कौमुदीव गगने परिपोष, विन्दती जनकसद्मनि रेजे ॥६९ ॥
आसतेस्म शतशोऽपि वयस्या, यद्यपि प्रियतरा खलु तस्याः ।
किन्त्वभिन्नतमता भिनशाखा[२]-माप तासु ललिता सविशाखा ॥७० ॥
तन्वती कमपि सा महिमान, मानिनोस्तनयतोऽपि सवित्रोः ।
रूपशीलशुचि-सम्पदगाधा, प्रेयसी परमवर्तत राधा ॥७१ ॥
आलिपालिवलिता पुरुपांशु-क्रीडनेन रुचिरेण चिरेण ।
चित्रयन्त्यपि चराचरचेत, सा रुचाऽतिचपलाऽथ चकाशे ॥७२ ॥
जातु गुप्तमणिक-प्रमुखेषु, क्रीडितेषु कुतुकेन विदग्धा ।
भासुरप्रतिभया च वयस्या, रा विजित्य जडभावमनैषीत् ॥७३ ॥
मञ्जुलेषु परितो वरसानु-ग्रावगह्वरगृहेषु सखीभिः ।
सङ्गता व्यतत साऽम्बरकन्या-पुत्रकोपयममङ्गललीलाम् ॥७४ ॥
सुन्दरीसहचरीपटलस्था, चर्चरीशवलितैः कलगीतैः ।
किन्नरी न निरवस्करवेषा, किन्नरीकुलमतिप्रदेषा ॥७५ ॥

---

१ कीर्तिरिति राधामातुर्नामान्तरम् ।
२ शाखोऽन्तिकम् ।

श्रीसहस्रमपि नैव कथञ्चिद्, यत्तुलां श्रयितुमीपदपीष्टे ।
सा स्वयं नु सुषमात्मकशक्तिः, र्भासतेस्म भवने वृषभानोः ॥७६ ॥
प्रागतीत्य वत शैशवसीमां, यौवनाध्वनि पदं निदधाना ।
वर्ण्यमानमुपकर्णचराक्षी, साऽशृणोद् गुणगणं वलवन्धोः ॥७७ ॥
सन्निशम्य सनमालिनमालि-स्वैरवाग्व्यतिकराद् गुणगौरम् ।
जातु जातुष-विसृत्वररागैः पूरिते हृदि निजे निदधौ सा ॥७८ ॥
अन्तरोक्षमिव निर्मलमुद्यन्नर्मया व्रजसुधानिधिरागः ।
कीर्तिजाहृदयमाशु विभासी रञ्जयन्नुपचिकाय निकामम् ॥७९ ॥
लज्जया महमृध सुमधन्वा, राधिकाहृदयधामनि भृष्णुः ।
विप्रयुक्तवनिताशतघात-स्नातकः कथमनैतु विगीतम् ॥८० ॥
शीतगौरिव चकोरकिशोरी, शार्ङ्गिणः सपदि दर्शनमिच्छुः ।
चित्तवृत्तिमुचितामथ दूती-कृत्य साऽस्य निकटं प्रजिघाय ॥८१ ॥
दुर्लभं तु हरिणा सह योगं, वल्लवेशदुहितुः कलयन्त्या ।
शाश्वतीमपि रुचं सविकासामाम्यशारदसुधांशुरहासीत् ॥८२ ॥
निह्नुतं बहु तयाऽऽलिजनेभ्यः, साधु यद्यपि तया स्वरहस्यम् ।
पार्श्वगैस्तत्र पराशयविज्ञै, द्रेतथाप्यविकलं तदविज्ञाम् ॥८३ ॥
सस्मितालपनकौतुकलोपो, भूरि निश्श्वसितमायतमुष्णम् ।
आनतिश्च वदनस्य नितान्तं क्लान्तमान्तरमसूचयदस्याः ॥८४ ॥
मीलिताक्षियुगतामरसेयं, श्यामसुन्दरमथो जितकामम् ।
आत्मविस्मृतिमती तमतीव, श्लक्ष्णधी रहसि साधु निदध्यौ ॥८५ ॥
सम्भ्रमेक्षितमर्मा हृदयेशं, सम्भ्रमादथ पुरोऽपि गुरूणाम् ।
कामलुण्ठितधृतिः कलकण्ठी, कम्बुकण्ठमुदकण्ठत धर्तुम् ॥८६ ॥
वत्सभेक्षण-निरन्तरचिन्ता, राधिकाङ्कलतिकामनुकार्यम् ।
पार्वतीमिव नदी तपतीव्रवन्भदीधितिरजस्रमनैषीत् ॥८७ ॥
भूषणं विरहितं विधुराया, हन्त कीर्तिदुहितुः शुचि वक्त्रं ।
वारिविन्दुततिमौक्तिकमाला, लोचनाम्बुजभवाऽलमकार्षीत् ॥८८ ॥
केऽत्रिमीच नवमम्बुदमारात्, सञ्चरन्तमनु गोनिकुरम्बम् ।
अट्टकुट्टिमचरी सुकुमारी, तं ददर्श वृषभानुकुमारी ॥८९ ॥
नन्दगोपसुत-सुन्दररूपं, चुम्बति स्फुटतरप्रतिरूपम् ।
अञ्जसैव सुमनश्शरबाधामादधौ रतिनिधौ हृदि राधा ॥९० ॥
अम्बुदान्तरिव शम्पविलासे, दृक्पथेऽवतरति द्रुतमस्मिन् ।
स्यान्नभुद्रुतभुजा मह सद्य., सौधमूर्धनि मुमूर्च्छ मृगाक्षी ॥९१ ॥

खण्डिताश्रयलतेव विसञ्ज्ञा, कुट्टिमे धुवमसावपतिष्यत् ।
सर्वदा निकटवर्त्यपि किञ्चित्, प्रामदिष्यदिदमालिकुलं चेत् ॥९२ ॥
विक्लवा सलिलपूर्णदृगन्ता, नाचिरेण वृषभानुतनूजाम् ।
आलयोऽथ शिशिरैरुपचारैश्चेतना समुपनेतुमशक्यन् ॥९३ ॥
नैकधा सवयसां वदनेभ्यः प्रीतिपूर्तमिह कीर्त्तिकुमार्या ।
श्रूयमाणमतुलं गुणवृन्दं, कृष्णमप्यहह रक्तमकार्षीत् ॥९४ ॥
चञ्चलामिव घने विलसन्तीं, तामुदीक्ष्य शिखरे सदनस्य ।
मोहनोऽपि भवसम्भवभाजां, सम्मुमोह सहसाऽहितसादी ॥९५ ॥
चेतना सहजधीरतयाऽसौ द्रागवाप्य नृपगोप-किशोरः ।
पारिपार्श्विकगणात्स्वरहस्य, गोपितु पुनरगोऽपि पुरोऽगात् ॥९६ ॥
ह्रीनियन्त्रणवशादवहित्थां, कुर्वतोऽपि नितरां शकटारेः ।
तन्निमग्नमनसो गतिभङ्गात्, प्राकटत्प्रणय नूतनसङ्ग ॥९७ ॥
अद्धाऽवधार्य बलवन्धुमणाधराधा-
लावण्यवारिनिधि-पूरनिमग्नधैर्यम् ।
नानाविध विदधतोऽध्वनि नर्मबन्ध,
प्रावोधयन् बहु कुशाग्रधिय सहाया ॥९८ ॥
हृन्निर्विशेषैः स सुहृद्विशेषैराश्वास्यमान सुरभृत्समान ।
राधा तथामन्मथजाणबाधां, स्वान्ते दधानो व्यविशन्निशान्ते ॥९९ ॥
इत्थ पथ्यन्यायतथ्यावलोकादश्रान्त स्नाक् तन्वतो सङ्गमेच्छाम् ।
भूयोऽयोगात्ताम्यतो कोऽप्यपूर्वो, रेजे राधाकृष्णयो पूर्वराग ॥१०० ॥
अथ 'मायादेवी'-सुकृतिपटली-मौलिमहित-
प्रथा-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचित ।
बुधाह्लादी रत्नावलि[१]-सहजराधापरिणये,
महाकाव्ये सर्ग परिणतिमवाप्नमनुमित[२] ॥१०१ ॥

*इति श्रीराधापरिणय-महाकाव्ये कृष्णाङ्के 'पूर्वरागप्रसङ्गो' नाम चतुर्दशः सर्गः ।*

---

१ गीनरत्नावलि
२. चतुर्दश ।

॥इति प्रभाया चतुर्दश सर्ग ॥

## अथ 'विरहविनिवेदनो' नाम
### पञ्चदशः सर्गः ॥

[1]सामन्तमुद्धतमिव स्मरसद्द्वितीयो
विद्राव्य मुक्तशिविरं शिशिरं तरस्वी ।
उच्छ्राययन् विकचकिंशुककेतुमुच्चै-
राशिश्रियद् वनमखण्डमथर्तुराजः ॥१ ॥
ओजस्विना सुरभिणा शिशिरं नृशंसं
निर्वासितं समवधार्य निरस्तभीतिः ।
दीनाश्चिरात्कृशतनुः पयसः कथञ्चित्
पाथोजिनीपरिकरो बहिरुल्ललास ॥२ ॥
कोप हिमार्दितचरेण धवेन भूयः
प्राप्तप्रतापविभवेन विभाकरेण ।
आश्वासिताः सुमनसा सहसा नलिन्यः
सौराज्यभाजि सुरभौ पुपुषुर्विकासम् ॥३ ॥
राजानमागतमवेत्य नवं वसन्तं
लब्ध्वा सत स्फुटरसालरसञ्च काणम् ।
प्रेम वचः स्तुतिमय विचरत्समन्ता-
न्नेतर्मुदा व्यततं कोकिलवन्दिवृन्दम् ॥४ ॥
राज्येऽभिषिक्तमवलोक्य मधुं मनोज्ञं
शीर्णारुहाः प्रमुदिताः प्रसवानजस्रम् ।
आभूषिता किसलयैरुपदाऽनुरूपा-
मामोदिनः सह लताभिरिहोपजह्रुः ॥५ ॥
दिग्जैत्रयात्रकुसुमाकरभूमिभर्तु-
र्विश्रान्तये पथि कियन्ति दिनानि नूनम् ।
आवृत-फुल्लतरुमण्डलकैतवेन
न्यस्तताररुशुभिरे वनसीम्नि दूष्याः ॥६ ॥
प्याः [illegible] मीरा
णात्र [illegible] ारः ।

१ १-६६ श्लो॰ वसन्ततिलकाच्छन्दः ।

आच्छादयद्विकचसूनभरस्वरूपै-
र्भृत्यानमूल्यवसनैरिव मङ्क्षु वृक्षान् ॥७ ॥
त्यक्त्वा निरागसमपि प्रसभं पुरा यं,
शिश्राय लोलुपतया स्वयमन्यवल्ली ।
स्वार्थान्धमागतमवेक्ष्य शिलीमुखन्तं,
गूढक्रुधेव सुरभौ विजहास मल्ली ॥८ ॥
जित्वोद्धतैः सुरभिभूपभटैः पुरस्थे,
शत्रौ विसारि शिबिरं शिशिरस्य कोपात् ।
आदह्यमानमिव कुङ्कुमशोणमुच्चैः
फुल्लं पलाशविपिनं विपुलं बभासे ॥९ ॥
निर्वासिता क्वचन ये शिशिरेण कोपा-
ज्जाड्यक्षयाय परितो ध्वनिमादधानाः ।
श्रुत्वैव कोकिलमुखान्मधुराज्यवार्ता-
माजग्मुराहितमुदो ननु षट्पदास्ते ॥१० ॥
जेतुं जगन्त्यभिलपन्नचिरेण शूरो,
नेता तरस्विनमथानलसं वसन्तः ।
सम्मन्त्र्य कामसुहृदा मलयानिलं प्राक्,
प्रज्ञानिधिं ध्रुवममात्यपदे न्ययुङ्क्त ॥११ ॥
प्रेयोवियोगचलकेरलकामिनीनां,
निश्वाससमासलवपुः पथि खिद्यमानः ।
वृन्दावने किमु विशिश्रमिषुः सुधीमे,
मन्दं विवेश मलयावनिभृन्नभस्वान् ॥१२ ॥
आदाय किंशुकरजः पटवासमारात्,
स्वैरं किरन् हरिदरुद्धवधूमुखेषु ।
वल्लीनवोढललना-कुसुमाक्षि धीरः-
शुम्भच्छिराय विजहारतरां समीरः ॥१३ ॥
प्राणाधिके सुहृदि भूतलभोजसंक-
च्छत्रं प्रशासति मधावतिमात्रधृष्णोः ।
दस्यो स्मरस्य युवधैर्यविलुण्ठनेन,
साकं तथा पथिकहिंसनमुन्मिमेष ॥१४ ॥

पुष्णात्मनोभृशमिषून् सृजतोऽप्रयास,
साहाय्यमाप्य सुरभेः सुहृदांवरस्य ।
तत्याज तद्व्ययबहुत्ववशेन जाग्रत्-
तूणीररिक्ततरतातिशयं मनोभूः ॥१५ ॥
आसेदिवान् पद्मकण्टकमोजसा स्वान्,
स्वीयप्रतापमभितः प्रथयन्नयत्नः ।
चिह्नानि वैरिशिशिरस्य हिमानि लोप्तु,
भानुद्युते प्रखरता मधुराततान ॥१६ ॥
सत्कारुसङ्घटितनीलमणिप्रवेकै-
रिद्धात्ततप्तकनकाभरणैरिवालम् ।
सद्यः प्रसादितवसन्त-कृपाभराप्तै-
रेजे मधुव्रततनैः स्तबकैरशोकः ॥१७ ॥
सर्वैः कणादमतगीतपदर्शनज्ञै-
र्निर्धारितोऽतिदृगपि प्रतिभानुसारम् ।
चैत्रे विकासिसहकारपरागयोगा-
च्चित्रं जनैर्मरुददृश्यत पीतरूपः ॥१८ ॥
कृष्णाम्बरद्युतिभृति स्फुटकर्णिकार-
स्तोमे वसन्नतिचिरं मकरन्दलोभात् ।
कीटस्वरूपपरिवर्तनकृत्सु भृङ्गः
स्थाने स्वयं कनकवर्णवपुर्बभूव ॥१९ ॥
आमोदिनि द्रुतविकस्वरकाञ्चनार-
व्यूहे निरन्तरनिवासवशेन रक्तम् ।
पौष्णाकरेऽहनि कथञ्चन चञ्चरीकं
न ज्ञातयोऽपि सहसा बत पर्यचिन्वन् ॥२० ॥
दूरादुपेत्य परिवार्य च वर्तमाना-
स्त्राशया विदधतो मृदुदीनशब्दम् ।
आमोदवान् मधुलिहो मकरन्दभिक्षां
कामं वितीर्य बकुलोऽपि चकार तुष्टान् ॥२१ ॥
पार्श्वगतान-पटुसूनपृषत्कपूर्णां
शाखामलम्ब्य नरमारमनावनद्धा ।

गुच्छावलि कुरवकस्य लसद्विकासा
तूणीरपालिरिव पञ्चशरस्य रेजे ॥२२॥
राकेव रात्रिषु विधोः शुचितामहिम्ना,
पत्नीषु शीलविभवेन सतीव भर्तु- ।
वासन्तिका परिमलेन लतासु तावद्,
भृङ्गोत्करस्य नितरां हृदयङ्गमाऽभूत् ॥२३॥
तिष्ठन्ति कामममृतवो बहवः परन्तु,
जागर्ति कोऽपि महिमातिशयो वसन्ते ।
यस्यागमेन सहसोपगतो विकास,
चञ्चत्सुगन्धि लकुचाऽप्यभवद्रसाल ॥२४॥
अन्वेषयन्नतिघने गहने चिरेण,
यो नागकेसररस समवाप भाग्यात् ।
तस्याञ्जसा मधुलिहः किमिवेतरत्र,
द्रागप्युदञ्चतु कथञ्चन चित्तसङ्ग ॥२५॥
आलोकिता विचकिलव्रतति प्रवासे,
दैवाच्चिर स्थितवतस्तरुणव्रजस्य ।
आमूलमाशिखरमुत्कलिका निकामं,
काम धमन्त्यभवदुत्कलिकानिदानम् ॥२६॥
आकर्षक परिमल प्रतिपद्य सद्यो,
यूनो मनोभवशरैस्तरलीकृतस्य ।
अन्विष्यतस्तदनुरूपमथो निमित्त,
दृष्टि क्वचिद्विकसिते तिलके पपात ॥२७॥
भ्रान्त्या मुहुर्भ्रमरोर्चकिना वनान्ते,
नावापि येन कमनीयपद कुतश्चित् ।
निर्हारि तस्य तु शिलीमुखशेखरस्य,
क्रीडानिकेतमिह केतकमेव जातम् ॥२८॥
व्यालोलकोमलदलाऽलिकुलानुकूला,
कल्लोलिन परिमल किल कल्पयन्ती ।
स्वच्छन्दकेलिनिलयो मलयानिलस्य
कालेऽलसत् सकलिका नवमल्लिकालि ॥२९॥

आस्वाद्य सान्द्रमकरन्दभरं चिराय
सानन्दमेव मधुरं ध्वनिमुद्गिरन्तः ।
माकन्ददीर्घतरमञ्जरिमञ्जुपुञ्जे
प्रेङ्खोलिकासुखमलं बुभुजुर्मिलिन्दाः ॥३० ॥
यन्नाम नाम महतां गुणयोगतस्तत्
कश्चिद्विपश्चिदृषभो नु पुरा वसन्तम् ।
जम्बीरसूनसुरभेः सुरभेः प्रसङ्गा-
दामोददानसुरभिं सुरभिं बभाषे ॥३१ ॥
चाम्पेयके स्फुटति हाटककूटशोभे
लोभाकुलं स्वलिकुलं बकुलं जहौ स्राक् ।
आघ्राय दुस्सहतरं सुरभिं ततोऽपि
दूरान्निवृत्य निजलोलुपतां शुशोच ॥३२ ॥
गन्धं दधत्यलिविनोदकरे वनान्त-
माक्रम्यतिष्ठति पलाशविकासहेतौ ।
विद्वेषिणि प्रतिपदं सुमनश्श्रियोऽलं
प्रीतिं दधौ यत मधौ मधुसूदनोऽपि ॥३३ ॥
इन्दीवरद्युतिभृताऽञ्जनमेचकस्य,
ब्रह्मप्रियेण कमलासनवल्लभस्य ।
स्थाने वसन्तसमये मधुसूदनेन,
साकं बभूव सखिता मधुसूदनस्य ॥३४ ॥
विश्वासभूः सुरभिनूतनभूमिपेन,
प्रायः प्रजामतिपरीक्षणसन्नियुक्तः ।
रात्रिन्दिवं प्रतिपदं विविधैर्विधानै-
र्वादं निगूढचरितो विचचार मारः ॥३५ ॥
आरामसीम्नि सरणिं समया विकासी
दासीकृतालिपटलः पनसोऽपि सायम् ।
उल्लास्य सौरभमसौरभसेन दूरा-
दध्यन्यमानसमभानसमाचकर्ष ॥३६ ॥
अभ्यागतं मलयमारुतमातिथेयी-
विज्ञो गृहीव महनीयगुणं महर्धिः ।

सन्तर्पयन् सुरभिसारसमर्पणेन
कीर्ति निरापदमविन्दत सिन्दुवारः ॥३७ ॥
पुष्पैर्नभो रुधिरवर्णमवर्णनीय-
दैर्ध्योनयन् स्फुटपलाशजिगीषयेव ।
कीरोत्करस्य मदमेदुरितप्रमोद-
व्यासेन शाल्मलितरुर्दयितोऽञ्जसाऽभूत् ॥३८ ॥
पादाग्रनम्रदयितप्रतिकूलवाचा-
माचामयन् कुसुमसान्द्ररसेन नासा· ।
विद्राव्य मानमचिराद् ग्रहिलाबलाना,
नून चकार मदनो मदनोपकारम् ॥३९ ॥
विश्लेषदूनदयिताच्छकपोलकान्ति
सस्मारयत् सुरभिलुब्धमधुव्रताढ्यम् ।
पश्यन् मधूककुसुम पथिको निर्माल्य
प्रोत्कण्ठितोऽपि तरसा चलितु न शेके ॥४० ॥
सौभाग्यगर्वितविपक्षमुखावलोका-
दीर्घ्याविलाशयविलासिनितम्बिनीनाम् ।
मानर्धिसन्दमनक॰कमनीयगन्धै-
र्यूनामभूद्दमनक खलु नर्ममित्रम् ॥४१ ॥
कृष्णच्छदो विपिनज सुमनोविभूष,
पुन्नागजिद् बहुशिलीमुखभृञ्जटाल ।
अह्नाय सेवनपरस्य हित विधाता
लेभे स्थिति क्वचिदसङ्कुचिता किरात ॥४२ ॥
रोलम्बमादकमरन्दमहाविदार,
पुष्पस्मरेषुविहितायुवहृद्विदार-।
आह्लादिताविरतसङ्गतभाविदार-
कुत्रापि निस्तुलमरोघत कोविदार· ॥४.
आयाति मन्मथसमीकसुहृत्समीरे
त्रस्यत्समीहितसमीपतरस्थसिद्धि· ।
दृष्ट्वा शमी स्फुटशमीमभवन्नु कान्ता-
दो पाशमीलनजनुः सहसा शमीप्सुः ॥४४ ॥

उद्ग्रीविकाभिरभितः सुमगन्धचौर-
च्छद्मप्रवेशमतिसूक्ष्ममपीक्षमाणम् ।
आरामयामिकमहर्निशमुत्थित किं
हिन्तालमालमवलोक्य विभाय वायुः ॥४५ ॥
आकाशवासनपरेण विभासमान
पुष्पन्धयान्धकसुगन्धिभरेण सद्यः ।
आशान्तशासनकरे कुसुमाकरेऽभू-
दुद्दिश्रतालविटपी विटपेतिमद्य ॥४६ ॥
व्योमावगाहपटुशेखर-शालिताल-
स्पर्धावशादिव निरन्तरमुच्छ्रितस्य ।
वासो विकासजनित क्रमुकस्य कस्य
प्रासादयत्र हृदय हृदयङ्गमस्य ॥४७ ॥
वीतान्तरालनवपल्लवपालिसन्ध्या-
रागानुषङ्गवशत सुषमाप्रकर्षम् ।
आलम्बिनी स्फुटरसाल-महीरुहाली
कादम्बिनी बहु चकार मरन्दवर्षम् ॥४८ ॥
रक्त सित च हरित हरितालवर्णं
निर्हारि हारि विपिनान्तविहारिणीनाम् ।
सेवन्तिकासुममनङ्गमुदेऽङ्गनाना-
मङ्गेष्वल दयितदत्तमधत्त लक्ष्मीम् ॥४९ ॥
आराममराममविराममवेक्ष्य यूना-
माचाममाममधुनोऽप्यविभक्तभामम् ।
[illegible]
सन्तापमाप विपुलं प्रवसत्कलापः ॥५० ॥
अत्रान्तरे च वरसानुगिरीशजान्त-
र्वेदामुपाहितचर विबुधो मनोभूः ।
कीनाशदिङ्मुखभवानिलवीजनेन
दध्मौ धराधरधरीयवियोगवह्निम् ॥५१ ॥
श्रीकृष्णदर्शनदिनाददधादवश्यं
कीर्ते- सुता यदयुता स्मरपारवश्यम् ।

तत्सङ्गते सहचरीनिचयोऽतिवेलं
त्रस्यन्नचिन्तयदुपायमिहानुवेलम् ॥५२ ॥
उद्भ्रान्तिसङ्गमितनन्दसुतेन सार्धं,
सार्धस्मितं प्रणयमञ्जुलमालपन्ती
उद्बोधिताऽऽसिपरिहासकदर्थनाभू-
र्नाभूद्वहि क्वचिदपीयमपत्रपार्ता ॥५३ ॥
बाह्यादशेषविषयाद्विरतेषु तुच्छा-
दन्तर्मुखेषु करणेषु सरोरुहाक्षी ।
पङ्गूकृतेन मनसा निभृतं वसन्ती
तूष्णीमुपास्त सततं हृदयेश्वरं सा ॥५४ ॥
अश्रान्तसेवितविविक्तगृहान्निशान्तां
नित्योन्नमन्मकरकेतुरुजा कृशान्ताम् ।
दासीशतेऽपि सति निर्वृतये समूह,
प्रेष्ठ स्वयं परिचचार सखीसमूहः ॥५५ ॥
म्रात्वाम्र्यभृद्विरहदाहवहाङ्गसङ्ग-
म्लाने मुहुः किसलये सलिलावतंसैः
आयोजयन्निभृतमेव भृता प्रमोदे,
काचिच्चिरं सहचरी शयनीयमस्याः ॥५६ ॥
अङ्गेषु मुक्तसकलाभरणेषु तस्या-
स्तापापनोदनधिया निहितं सखीभिः ।
उद्दामकामजनुषा सहसा रुजाऽल
ज्वालीबभूव बत बालमृणालजालम् ॥५७ ॥
दैनन्दिनीमवनतिं वपुषः प्रसाद-
प्रभ्रंसिता च मनसोऽनुसमीक्ष्य तस्याः ।
कामप्रसक्तनवकामदव-प्रशान्त्यै
कृष्णाम्बुदोपनतये ललिता प्रयेते ॥५८ ॥
सोधाशवीं द्युतिमिवास्तमनोन्मुखीं ता-
मालोक्य पङ्कजमुखी स्वसखीं विशाखा ।
अल्पुन्मनश्च ललितामनुसृत्य तूर्णं
पूर्णं विधातुमभिलाषमिमं प्रतस्थे ॥५९ ॥

सख्या वियोगकदनं तदनन्तरं तद्
वक्तुं नृलोकमदनं सदनं दयायाः ।
उत्कण्ठता तरलिता चलिताऽन्विताति-
प्रज्ञातिरेकललिता ललिता व्यमृक्षत् ॥६० ॥
कुर्यात्कृपां त्वरितमेव यथा मुकुन्दो
नश्यन्न च प्रियसखीनियताभिमान ।
तत्कामपीडनविधा बहुधाऽभिधातुं
पन्था यथामति तथा लघुकर्षणीय ॥६१ ॥
व्यालोलकुण्डलमलङ्कृतगण्डपालि-
स्वेदोदबिन्दु-रतिसुन्दरमालियुग्मम् ।
निन्ये मनोरथरथेऽवितथेऽधिरूढ,
पन्थानमुज्ज्वलकथाभिरथावसानम् ॥६२ ॥
कान्तादुरन्तविरहव्यसनेन तान्त-
मेकान्तवासिनमनन्तमदो नमद्राक् ।
धृत्वा विमुष्टहृदय धुरि सन्निकृष्ट-
पृष्टे शिवे प्रियमधृष्टमसृष्ट वाक्यम् ॥६३ ॥
आनन्दकन्द ! करुणार्णव ! कृष्णचन्द्र !
श्रीमन् ! क्षणं कुरु मनागवधानदानम् ।
यावद्वदामि वृषभानुतनूभवायाः
स्वैरं मनोजमृगयो मृगयाप्रपञ्चम् ॥६४ ॥
कुत्रापि दृष्टविषकृष्णभुजङ्गदष्टा
सद्यः पतति बत जीवितसंशये या ।
अभ्येत्य कारुणिकमौलिमणे ! नरेन्द्र !
प्राणप्रयाणमवरुन्धि रसेन तस्याः ॥६५ ॥
आजुहूर्तामनुपल करुणे स्वैरस्त्वां
तार निरेण करिणीमिव पङ्कलग्नाम् ।
उद्धारयाशु जगदेकशरण्य ! राधां
प्राणेश्वराधिसुमधन्वशराधिमग्नाम् ॥६६ ॥
त्रस्यद् दृशं प्ररुदतीमकृतापराधा,
राधां प्रभो ! चिरमपोहितजीवनाशाम् ।

तीक्ष्णैः शरैर्विरहिणी हरिणीमिवामू-
हा हन्त हन्ति मृगयुर्मदनस्त्वदर्थम् ॥६७ ॥
मीनध्वजेन विबुधेन पुरोहितेन
सम्बोधितेन विधिना विधिना नियुक्ता ।
आनन्दमेदुरभवत्पदमीहमाना,
देहं जुहूषति वियोगहुताशने सा ॥६८ ॥
इत्थ्येशयोरहह ! दुर्ललिता सवित्रो-
र्या केवलं सुखमिहानुबभूव नित्यम् ।
आः सेव केशव ! भवत्प्रणयप्रसादात्,
किं किं न दुःखमधुना सहते वराकी ॥६९ ॥
त्वद् दुर्लभत्वकलनोत्थविषादलक्ष्म-
म्लानस्तदाननशशी मुहुरीक्ष्यमाणः ।
चिन्ताह्रदे रसिकरत्न ! विदूयमानं
स्वान्तं निमज्जयति हा प्रसभं जनन्याः ॥७० ॥
अज्ञातहेतुदुरपोहरुजा तनूजा-
मास्कन्दितां बलवदङ्ग ! मृणालमृद्वीम् ।
वात्सल्यसिन्धुरवलाकुलमौलिरत्नं
बाला बलानुज ! विलोक्य बिभेति तातः ॥७१ ॥
प्रायः समस्तसुरवर्गनिशातगर्व-
श्चूर्णीकृतो व्रजनृपालसुत ! त्वयैव ।
दीनाममूमनु समूर्जितवीर्यदर्पं
कन्दर्पमच्युत !नृशंसमुपेक्षसे किम् ? ॥७२ ॥
अङ्गै स्फुटत्कनककेतकगौरिमाणं,
न्यक्कुर्वती प्रकृतिमञ्जुमुखी सखी मे ।
त्वद्विप्रयोगदवसम्भवपाण्डुभावं
प्राप्ताऽपि सा विरहिणी न विभाव्यतेऽन्यैः ॥७३ ॥
उल्लङ्घ्य गौरवमुपेक्ष्य वचो गुरूणा-
मालीजनाननुरुध्य विरुध्य भीतिः ।
लज्जां विमृज्य च हरे ! भवदेकतान-
स्वान्ताऽन्तिकं सततमुद्यतते वताप्तुम् ॥७४ ॥

त्वन्मूर्तिसम्मननीतसमस्तकाला
निर्वातवर्त्तिरिव दूरमिताऽचलत्वम् ।
उत्साहदुर्विधमना न मनागपीय
नित्योत्सवेऽपि भवने रमते कदाचित् ॥७५ ॥
हन्मारव पथि निशम्य गवा मुकुन्द !
त्वामालुलोकयिषुरेति मुहुर्गवाक्षान् ।
सद्यो निवृत्य निभृतं श्वसती सलज्जा-
खेदा दृशा च निदधाति सखीमुखेषु ॥७६ ॥
आकर्ण्य वेणुरणितं निकटे गुरूणा-
मुत्कर्णिका प्रणयविस्फुरणोत्तरङ्गा ।
व्याज प्रणीय किमपि प्रगुण प्रवीणा
विष्वग् विघूर्णयति घोषमणे ! स्वनेत्रे ॥७७ ॥
त्वा चित्रवर्तिनमुपास्यु कृतप्रणामा
कामाहित कदनमङ्ग निवेदयन्ती ।
गोविन्द ! वञ्चयितुमालिदृशा विहस्ता
स्वस्ताञ्चलेन सहसा पिदधाति मुग्धा ॥७८ ॥
वैक्लव्यभूमतरले नयने समन्ता-
न्निर्दिश्य मन्दपरिदेवनमाचरन्ती ।
शारीव सा भवनपञ्जरसन्निरोधा-
दुत्ताम्यती क्षपयति क्षणमप्यभाग्या ॥७९ ॥
नैराश्यलास्यपिशुनीं स्तिमितां दृगन्तीं,
नि क्षिप्य साश्रु कियतीषु सखीषु याला ।
कालानिलं प्रचलितेव सहायताया
भीरुः प्रतीक्षणमसौ क्षणमातनोति ॥८० ॥
लावण्यसिन्धुमवगाह्य वपुर्यदीय
कामं पुरा परिजनस्य ननन्द दृष्टिः ।
तामेव चन्द्रिकलामिव राहुधृता-
मालोक्य विन्दति विषादमनन्तमन्त- ॥८१ ॥
हा धिग्निरन्तरगलन्नयनाम्बुधारा-
सम्पर्ककर्दमितकज्जललेपभाज- ।

राधाननस्य मधुसूदन ! निष्प्रभस्य
स्पर्धां ध्रुवं शशधरोऽप्यधुना विधत्ते ॥८२ ॥
भित्त्वैव सम्प्रति तदुन्नतधैर्यसेतुं
दूरं प्रवक्ष्यति तदीक्षणवारिपूरः ।
चक्षुर्विभाकरकरैरुपगम्य सौम्य !,
प्रीतो न नेष्यसि यदि त्वरयैव शोषम् ॥८३ ॥
बाल्यावसानदिवसे सुषमाप्रकर्षा-
देषा यतो जितवती मदनस्य कान्ताम् ।
तस्मात्तत प्रभृति तीक्ष्णशरैः सरोष-
स्तामेष सन्ततमकारुणिकः क्षिणोति ॥८४ ॥
उद्वेगदायिनमपि प्रथमं तपान्ते,
कुर्वन्तमभ्रमतसीसुमसन्निकाशम् ।
त्रैलोक्यसुन्दर ! विभो ! भवत सवर्णं
पाथोमुचं विरहिणी बहु मन्यते सा ॥८५ ॥
त्वां ध्यानलम्भितमुपास्य मुहुः प्रणामै-
र्दृग्गोचरत्वमचिरात् खलु याचमानाम् ।
आलोकनादनुगृहाण गृहाण चास्याः
प्रेमोपहारमुचितं हृदयेन दत्तम् ॥८६ ॥
हृद्यां सखीरपि हरेऽविनिवेद्य सद्य,
सर्वस्वमेव हृदयं वितताार या ते ।
तां जीवितं विजहतीं त्वमुपेक्षमाण,
साध्वीमुपार्जयसि नन्दकिशोर ! कीर्तिम् ॥८७ ॥
यो वारणेन सकृदेव निमज्जता स्रा-
गाकारितः करुणया शरणं पुराऽभूः ।
दुःखार्णवत्रुडितकीर्तिदुहितुर्दीर्णे-
माहूतिलक्षमपि नैव शृणोषि स त्वम् ॥८८ ॥
अग्रेसरत्वमखिलेषु कुतूहलेषु
स्वामित्वसम्पदुचितं प्रसिसेध यस्याः ।
औदास्यमद्य बत तेषु नितान्तमस्या
रस्या सखी व्रजविधो ! विमनीकरोति ॥८९ ॥

प्रियर्व्वदे । मित्रमधुप्रसाद-प्राप्तातिमात्रेषु घनुर्निषङ्गः ।
मामप्यदश्चिन्तनमात्रसक्तं नक्तन्दिवं व्याकुलयत्यनङ्गः ॥९८ ॥
को नाम लोके गुणराशिगौरीं, गौरीं सुशीलेन विलज्जयन्तीम् ।
विकासयन्तीं हृच्चेतसम्भां, सम्भावयेत्रैव युवाऽऽम्नुवानः ॥९९ ॥
विपच्यमाना स्ववियोगवह्नावहाय ता निश्चितमुद्धरिष्ये ।
इत्येष सन्दिश्य गतां सतृष्णः प्रास्थापयत्तं प्रणयेन कृष्णः ॥१०० ॥
अयं 'मायादेवी'-सुकृतिपटली-मौलिमहित-
प्रथी-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचित ।
महाविद्यास्तोत्रा[1]-नुजललितराधापरिणये
महाकाव्ये सर्गः परिणतिमयासीत्तिथि[2]-मित ॥१०१ ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के 'विरहविनिवेदनो'*
*नाम पञ्चदशः सर्गः ॥*

१. प्रमोदलहरी ।
२. पञ्चदश ।

*॥इति प्रभाया पञ्चदश सर्ग ॥*

## अथ 'दावपावकपानो' नाम
## षोडशः सर्गः

अथफुल्लकपीतनातपत्रो,[1] विकसत्केतकचामरः प्रतापी ।
ऋतुराजपदे तदेकयोग्यं, तरसैव स्वमतिष्ठिपन्निदाघः ॥१ ॥
कुसुमायुधमन्त्र्यधीनसिद्धिं, तरलं नित्यविलासवृद्धितृष्णम् ।
अवलाबलमञ्जसा वसन्तं, जितवानेष नवोज्ज्वलप्रतापः ॥२ ॥
विततं रतसीधुसेवनादि, व्यसनं सार्वदिकं मधुप्रणीतम् ।
तरुणप्रकरस्य सन्निरुन्धन्, निदधौ साधु रतिं स साधुसङ्घे ॥३ ॥
अनुरञ्जितविश्वमप्यधृष्णु, मृदुलं चन्दनशैलगन्धवाहम् ।
सुरभेः सहकारिणं निरास्थन्नयपास्थाय परन्तपस्तपः प्राक् ॥४ ॥
विरहस्य विवस्वतश्च तापं, विपुलं पल्लवयन् निपीतशीतः ।
कलयाऽपि न तावदूष्मकालो, रुरुचे प्रोषितभर्तृकाङ्गनाभ्यः ॥५ ॥
अचिरेण तनूकृतत्रियामः, सुखदोपि प्रचुरं वियोगिनीभ्यः ।
अभवत्तु विशिष्य दुःखदायी, प्रकटं द्राघितवासरो निदाघः ॥६ ॥
अवनीमतितापयन् सुगुल्मा, वततीस्तीव्रमहा दहन् वृथैव ।
विदधच्च जलाशयालिशोषं, न स तोयं जगते क्वचिद्व्यतारीत् ॥७ ॥
रजनीकृशता तृणाल्पभावं, विदधानेऽधिपतौ तपे विभाति ।
मुदमाप परं रथाङ्गनाम्ना, विरही, किन्तु खरोऽतिभोजिमानी ॥८ ॥
अभिसारनिवारणं विकीर्णन्, रजनीरेष वृथाऽऽततान तन्वीः ।
व्यहरन् दिवसाभिसारिकाश्चे-दिह सानन्दमितस्ततो दिवैव ॥९ ॥
दिनदीर्घतया चिरप्रणेयैरपि शिल्पैर्वसु भूरिशोऽर्जयन्तः ।
अपि विप्लुतघर्मसिक्तगात्रा, नितरामूष्मणि कारवः प्रसेदुः ॥१० ॥
करसङ्कलने तपेन राज्ञा, नलिनीमण्डलनायको नियुक्तः ।
अपरादपि मेदिनीद्रुमादेः, किमगृह्णाद् रसमोजसा प्रचण्डः ॥११ ॥
अभितः सरणिं तृणानि दग्ध्वाऽनपरं जग्धिविडम्बनां पशुभ्यः ।
अपितु प्रददौ निदाघसूर्यश्शरणक्लेशमसह्यमध्वगेभ्यः ॥१२ ॥
अवलोक्य मरीचिका विलोल-द्रसना भास्करतप्तवालुकौघे ।
हरिणाः सलिलभ्रमेण दूरं, द्रुतमुष्णोपगमे श्रमेण जग्मुः ॥१३ ॥
अचिरोद्गमनात् कुसुम्भवर्णा, सकला- पल्लवपालिमूष्मकाले ।

---

१. सर्गेऽस्मिन् ९६ श्लोकं यावन्मालभारिणीच्छन्दः । कपीतनः शिरीषः ।

रसनामिव वीरुधो विलोलां, बहिराक्लान्तहृदस्तृषेव निन्यु ॥१४॥
अतिवाडवपावके खरांशौ, परित शोषितवारि भाति जात ।
अतिलोल-लुलाय-केलिलीला-निलयः पल्वलपङ्किलाम्बुपूरः ॥१५॥
अलिनो मलिना मधोरशेषानपि विस्मृत्य गुणान् सरोजराजौ ।
उदरम्भरयो निदाघमेव, प्रयता मञ्जुलगुञ्जनैरगायन् ॥१६॥
सरित परित समुद्धतोया, विदधु प्रावृषि या गतिं स्वतन्त्राम् ।
तपशासनमेत्य ता कृशाङ्ग्यस्तपसा शुद्धहृदो नु धीरमूहुः ॥१७॥
स्फुटपाटलकाननान्तरङ्ग-स्थितिसञ्चारविजृम्भितानुबन्ध ।
पृथिवीव्यतिरेकिणोऽपि वायोः क्षणमाघ्रायत कौतुकेन गन्ध ॥१८॥
अरुणै र्वसनैरिव प्रसूनै, र्लसितोऽर्काभिमुखं बहिश्च तिष्ठन् ।
करवीरतरुस्तपे तपस्य-न्निव सौरो[1] ददृशे जनै सचित्रम् ॥१९॥
क्वचनानुपलभ्य वासमर्हं, भ्रमदिन्दिन्दिरराशिमाशु दूरात् ।
प्रियसौरभमाचकर्षहर्षस्वनभाज नवकाशिकाविकास ॥२०॥
अहसत्किमु धातकी प्रसूनैरधिमध्यन्दिनमर्चिषा सवर्णै ।
अतिरागमिह प्रकाशयन्ती, सुरभौ फुल्लपलाशराशिभासम् ॥२१॥
प्रविकाशिशिरीषशाखिमौली, निवसन्दर्भसगर्भपक्षकान्तिः ।
मधुरेण परं स्वरेण धीरैरपि दूरात् परिचीयतेस्म कीर ॥२२॥
रुचिकोमलतेष्टगन्धसारैरुचितं वीक्ष्य शिरीषमद्वितीयम् ।
अभिषिच्य किमु प्रसूनराज्ये, विधिरस्थापयदुन्नतद्रुमाग्रे ॥२३॥
नलिनीरलिनीयमानभूयो-मकरन्दा विकचारविन्दवक्त्रा ।
अवहन्मिहिरोऽहरर्धभागे, बहुतापेऽपि तपे विलोक्य मोदम् ॥२४॥
कृशकायनिरन्तरोष्णकिञ्चित्-पवमानस्फुरणच्छलादिनार्धे ।
श्वसितीव मुहुर्मही महीय कदनं तापकृतं निवेदयन्ती ॥२५॥
उपयाति दिनद्वितीययामे, सकले जीवचयेऽम्बु पातुकामे ।
अरणित्वमवाप दारुमात्रम्, मिहिरानिर्वचनीयतापपात्रम् ॥२६॥
अभिधानमवेत्य संशयानो,धरणेः सर्वसहिष्णुता विवस्वान् ।
स्फुटमातपवह्निकीलजाल, ज्वलयित्वानुचकार तत्परीक्षाम् ॥२७॥
अपि निस्खनितम्बिनीजनानां, वपुरस्पृष्टविभूषण दयालु ।
श्रमवारिकणच्छलेन मुक्ता-पटलैर्मण्डयतिस्म किं निदाघ ॥२८॥

---

१. सूर्योपासक ।

तरुणातपपोष्यमोघजन्या, खमिवालोकयितुं समुन्नतानाम् ।
करिणामिव शेखराद् गिरीणां, मदधारोपमनिर्झरा निपेतुः ॥२९ ॥
तनुतामिव तापतो दधाना, वततिव्रातविभूषणैर्विहीनाः ।
नवनिर्झरराजिकर्मलाभाद्, विपुलं वाणगुणत्वमापुरुग्रम् ॥३० ॥
निबिडाततशाखपादपानां, प्रकरैरन्तरितातपे तपेऽस्मिन् ।
घनसङ्कुशोऽध्वसन्निधाने, पथिकश्रान्तिपगः प्रपाप्रपालिः ॥३१ ॥
अधिरात्रि तुषारऽगतोऽतिदूरात् रविसारसिमतया वितीर्णमाणम् ।
अभिषक्तरुणोऽध्वगो विदग्धः, सलिलं सारसरसौरभ गुरुस्तु ॥३२ ॥
भमरीगणिनिषेविता. सगन्धानमपुरामोदधुरां वहन् विटेभ्यः ।
अचिरस्फुरदीधुपानखर्जू, स्फुटखर्जूरमहीरुहो व्यतारीत् ॥३३ ॥
उपकूलगुणेत्य निरशलाके, तरुणीं प्रोषितवल्लभा रसा द्राक् ।
तपनातनुतापिता विदग्धा, सुपान्थो जललहरिणी ययाचे ॥३४ ॥
उपरि स्फुरदातपेन,भौमे, ज्वलिता संकलगर्भिता च नूनम् ।
इह गोचरमागकार पान्थो, दिनमध्ये पुटपाकदीप्रताम् ॥३५ ॥
कृतसंज्वरधर्मणाभितापां,कमलिन्य सरसि प्रभूतहर्षाः ।
प्रसरल्लहरीविलोलितांगां, व्यकरन्नाश्रितकान्तरामभिरूपाः ॥३६ ॥
निखिले जगतीह दह्यमाने,महसा संवतरातपस्य जाने ।
विललास पर विकासिभाग्यः, कमलानां रविसेननानुभावः ॥३७ ॥
विकसरसवकाग्रतरशाली, सुतरामुल्लसभूतिकुन्तलीयान् ।
उदजृम्भत लाङ्गलीय कृष्णच्छदपूर्ण.पथि लाङ्गली कुलाभित् ॥३८ ॥
शिशिरेतरभरेण भृष्टकल्पैः, परितो नूतनपल्लवैश्च पुष्पैः ।
प्रसरद्गगनान्तरालमहः, सुषमा नो पुपुषुः पुरेव गुल्माः ॥३९ ॥
मरुधर्मभिर्मूर्च्छिता वृषाऽलं, पथिकानां सहसा कुतोऽपि लब्धम् ।
इह जीवनमब्दराशिपि द्रागभवज्जीवनमेव शीतशद्गुम् ॥४० ॥
तनुरतशरणात्कृतोऽपि तावद्, भृशमुष्णोपगमेन दूयमाना ।
उचितामिह मेनिरे शरीरद्, जगतः प्राणतया समीरणस्य ॥४१ ॥
तपति प्रसभं सहस्ररश्मौ, महति प्राशु च वाति हेतिकल्पे ।
अपलम्बनमेकमस्ततामां, वनुतेऽनिभ्यनृणां तु गर्भगेहम् ॥४२ ॥
तरणेः किरणैरलं मनुष्यैरिव निर्णीतगमा दिनैः विभ्राद्भिः ।
सति स्वकपदे तत पथुले, महतामावलम्बनाविदेशः ॥४३ ॥
मृदुलाघघना दिवामुखानो यमिनः श्यामनितम्बिनीरसनाशा ।

शिशिरीकृतवातशातधारा-गृहमध्यास्य विहारमारभन्त ॥४४ ॥
प्रखरातपभूरिभीरुबाला, नवमालामपि भोगिनो वहन्त ।
दिनमध्यमुदात्तमुद्रवाक्षं कतिचित्कूटगृहं प्रविश्य निन्यु ॥४५ ॥
शिशिरे वटमण्डपे यथास्वं, घनदूर्वास्तरणे पृथङ्निषण्णाः ।
विदधुस्तपवासरान्तराले, क्वचन ग्राम्यजनाश्चिराय गोष्ठीम् ॥४६ ॥
प्रसिता परिवृत्य वारमध्ये, निविडच्छायतरोस्तले स्थितेभ्य ।
विनयावहिता हितामशृण्वन्, स्थविरेभ्यः शिशवः पुराणवार्ताम् ॥४७ ॥
प्रतिवर्त्म दिवान्तरालशश्व-ज्ज्वलदुद्घाटनतर्पिताध्वनीना ।
अभितो भुवमूषरामपीह, प्रहय प्राञ्जलमुर्वरामकुर्वन् ॥४८ ॥
विततच्छदकाण्डशाखनैक-द्रुमषण्डव्यपदिष्टमातपत्रम् ।
ननु सज्वरभीरुरत्र सर्व-सहतामुत्सृजती क्षितिर्व्यतानीत् ॥४९ ॥
निविडैः करशीकरैरजस्रं, करिणीः पूरनिमग्नविग्रहार्धाः ।
सलिलैरभिषिच्य पद्मवासैर्युवनागा निरवीवपन्नुदन्याम् ॥५० ॥
बहलैर्मृगजातघातलब्धैरशनाया पिशितैर्निवर्त्य तप्ता ।
नगशैवलिनीतटे विविक्ते, विमलं वारि पिबन्ति पुण्डरीकाः ॥५१ ॥
कलयन् विरस सतापमन्त, क्रियमाणः किल दूरत सतृष्ण ।
अभजत् पथि पल्वलो निदाघे, बहुविश्राणनवीतवस्ववस्थाम् ॥५२ ॥
अधिवासितकाननान्तरीक्ष, शिखरैः सुप्रसवैर्विभूषयन्ती ।
विललासतरां प्रियालपालि, विकसद्वल्लरिलालितालिमाला ॥५३ ॥
परिपालयता वनेचराणां, मुहुरुद्ग्रीविकयेक्षिणा फलाशाम् ।
अविलम्बितमम्बराग्रजम्बू-निकुरम्बं द्रढयाम्बभूव फुल्लम् ॥५४ ॥
क्वचिदूष्मसमागमेन माद्यश्चलघोणश्च निमील्यमाननेत्राम् ।
करभो विवृताधरोऽतिघोषो, विततग्रीवमचुम्बदेत्य कान्ताम् ॥५५ ॥
चरतां सह जाययाऽधियूथ, मुहुरुच्चैः क्षिपता पदे प्रतीची ।
युगपन्नदता च रासभानां, विदधे कस्य मदोद्गमो न हासम् ॥५६ ॥
चरणैर्वसुसम्मितैर्विषाण-द्वितयेनापि युवद्विपारिमाथी ।
उदमाद्यदगेन्द्रकन्दरान्तः शरभो ग्रीष्मदिनेषु भीष्मरावः ॥५७ ॥
अवसायिनि वासरे समन्ताद्, दवलेखा शिखरोपकण्ठलग्नाम् ।
दहनोज्ज्वलशातकुम्भमालामिव बिभ्रद्धरणीधरश्चकाशे ॥५८ ॥
दिवसेऽवसिते स्फुलिङ्गराशिं, विकिरत्यूष्मभरे च लीयमाने ।
भ्रमणाय समीरसेवनार्थी, ससुहृन्नागरिकोत्करः प्रतस्थे ॥५९ ॥

सरसो दिवसावसानकाले, शिशिरैर्गन्धजलैर्निषिच्य हर्म्यम् ।
रचिते कुसुमैर्दलैश्च तल्पे, कलगीतै रमयाञ्चकार रामा ॥६० ॥
विरहादिह बिभ्यतः प्रियाणामविवेकांस्तु विहाय चक्रवाकान् ।
असुमर्पतरोष्मणां दिनानामवसान न सुखाचकार क वा ॥६१ ॥
सुतरा लयवः प्रचण्डवात-व्यतिषङ्गात्सहसोद्गता निकामम् ।
धनिपामरवत् कुमित्रयोगात्, परितः पार्थिवपांशवो बभूवु ॥६२ ॥
मशका सह मत्कुणैश्च दशैः, प्रभवत्यूष्मणि निस्सृता कुतश्चित् ।
मिलिता भृशमस्वपा समन्तादतुदन्वीतदया प्रसह्य जीवान् ॥६३ ॥
निशि बृंहितमन्यथास्तथाऽऽरात्, प्रतिगृह्य स्फुटचन्द्ररश्मिजालम् ।
विहरन्ति चिरंस्म सस्मराभो, रमणीभिर्धनिनोऽधिचन्द्रशालम् ॥६४ ॥
अनियन्त्रणतापतापनाना-विधकेलिश्रमतान्तदम्पतिभ्याम् ।
अनिशं प्रवहन्नुशीरधीरव्यजनोत्थो व्यतरन्मरुत् सुषुप्तिम् ॥६५ ॥
प्रियया वसनाञ्चलेन मन्दं, मधुरालापपरः प्रवीज्यमानः ।
तदुरःस्थललम्बितोत्तमाङ्गस्तपतापं न विवेद कोऽपि धन्यः ॥६६ ॥
दिनमर्कमरीचिभिर्विचित्रं, दवथुं खल्वनुभाविताश्चलन्तः ।
पथिका निशि चत्वरे शयानाः, शशिरश्मीनमृतस्रुतः प्रतीयुः ॥६७ ॥
सलिलं शशिधाम मल्लिमाल्यं, बिसजालं हरिचन्दनं निदाघे ।
कुसुमास्तरणं मपानकञ्च, प्रियमासीन्नितरां विलासियूनोः ॥६८ ॥
करपल्लवलोलितं सलीलं, परमाभ्यन्तरवेश्मचारिणीनाम् ।
शरणं कुलसुभ्रुवामिहासीत्, प्रसरत्यूष्मभरे च तालवृन्तम् ॥६९ ॥
इह सन्ततताषमत्यसह्यं, प्रतिपद्येव निसर्गशीतमृद्वी ।
सरिता लतया च साकमद्धा, रजनी प्रत्यहमाससाद कार्श्यम् ॥७० ॥
अचिराभ्युदिते दिनेशपत्ये, सवयोगोपजनार्थनानुरोधात् ।
पुनरप्यमलं यशो यशोदा-तनयः स्थापयितुं वनं प्रतस्थे ॥७१ ॥
मनसा वृषभानुजामुखाब्जं, नवलावण्यविनीतपार्वणाब्जम् ।
कलयन् स सुहृत्सु सानुरोधं, कथमप्युच्चरतेस्म सानुरोधः ॥७२ ॥
व्रजतां खलु सम्मुखं खरांशो-रखिलानां मुखमण्डलानि तेषाम् ।
परिपातिपरन्तपातपानां, सुषमां स्वामुमुषुः सरोरुहाणाम् ॥७३ ॥
प्रतपत्यपि सर्वतः कराले, प्रसभं भानुमतो मरीचिजाले ।
न मनागपि तेऽभवन्निवृत्ताश्चलनाद्व्यवसायवित्तवृत्ताः ॥७४ ॥
वकवैरिपुरस्सरास्ततोऽमी, विविधं पर्यवसायिते विनोदैः ।

## अथ 'कैतवसमागमो' नाम
### सप्तदशः सर्गः

*अथ* [१] *शैलधरोऽञ्चितस्मरो, ललिताया ललिता गिरः स्मरन् ।*
सविशेषमियेष केशवः, स्वयमाश्वासयितुं रह प्रियाम् ॥१ ॥
दयितामुपसर्तुमुन्मना, निरपेक्षामधिजीवितं हरिः ।
अजहात् सहजान्तु धीरता, सरसं पञ्चशरो हि दुर्जयः ॥२ ॥
विरहव्यसनं कलावती-दुहितुर्दुस्सहमालिजल्पितम् ।
त्वरयाऽपनुनुत्सुरच्युत-श्च्युतदोषो विममर्श संविधाम् ॥३ ॥
निखिलान् सहयायिनो विना, प्रकटं यामि किमु प्रियान्तिकम् ।
उत कञ्चन कौतुकाकरं, निभृतं कैतववेषमास्थितः ॥४ ॥
प्रयतेन पतीकृतं हृदा, ध्रुवमेवापरिवर्तिनाकृतिम् ।
परिचित्य पुर स्थितं तु मा-, मतिशालीनमतिक्षपेत सा ॥५ ॥
सहसोपनतं कुमारिका, पुरुषं कञ्चिदसंस्तुतं रह ।
परिवृत्ततनु तु वीक्ष्य मां, विभियादेव निसर्गविक्लवा ॥६ ॥
तदुपेक्षणमप्यसङ्गतं, मदनो यामुपहन्ति मत्कृते ।
इतरा च गतिर्न दृश्यते, रमणीरूपमतो विधेलिमम् ॥७ ॥
इति साधु विविच्य राधिका-सविधे यौवतविग्रहेण सः ।
गमनाय वियोगवेदना-शमनाय ध्रुवमादधौ मतिम् ॥८ ॥
पदयो र्मणिनूपुरे कटौ, रसना स्वर्णमयीमसौ ततः ।
करयो रमणीयकङ्कणे, विमलां वक्षसि मौक्तिकस्रजम् ॥९ ॥
चिबुकेऽञ्जनबिन्दुमीक्षण-द्वितये कज्जलमुज्ज्वलं मुदा ।
अलिके तिलकं च कौङ्कुमं, निदधौ वासितवीटिकां मुखे ॥१० ॥
वसनेन सहार्करोचिषा, परिधायारुणवर्णकञ्चुकम् ।
कमलेव बभावसंशयं, धृतलीलाकमलेन पाणिना ॥११ ॥
कुतुकेन पुरेव मोहिनी-कृतमात्मानमवेक्ष्य दर्पणे ।
निभृतं मधुरस्मितं शनैः, प्रययौ कीर्तिसुताप्रतिश्रयम् ॥१२ ॥
अतिवञ्चितलोकलोचनो, व्यपदेशादभिसारवानिव ।
विरचीकृतभूषणो जवादभवत्नन्दनिकेतनाद्बहिः ॥१३ ॥

---

१. सर्गेऽस्मिन् १८ श्लोकं यावद्वियोगिनीच्छन्दः ।

अवहद् भियमेकशोऽपि नो, पथि गच्छन् विजने जनार्दनः ।
परिवर्तनमाशु वेषवत्, प्रकृतेर्नैव जनस्य जायते ॥१४ ॥
उपपद्यति भूधराटवी-सुषमाकृष्टदृशं विलम्बिनम् ।
स्मृतिगोचरतागता च त, ललितासूक्ति-रत्वरत्तराम् ॥१५ ॥
मुरलीकलवादनस्पृहा-मरुणात्स स्फुरितां पदेपदे ।
विषये न विषज्जति क्वचित्, प्रियसाक्षात्करणोत्सुकं मनः ॥१६ ॥
प्रणयादिव नम्रतामितैस्तरुभिस्तीररुहैं र्विचित्रया ।
क्षणमेकमम्पु व्यलम्बयत्, प्रसभं प्रेमसरोवरं श्रिया ॥१७ ॥
वयसां कलकूजितप्लुत प्लवगानां पृषतां निरीक्षणम् ।
नटनं शिखिनां च तन्मनश्चलमप्यध्वनि साध्वमोदयत् ॥१८ ॥
उपलैं र्जटिलां नतोन्नतामपि राधासुदिदृक्षयोद्धुर ।
वरसानुगिरेरुपत्यका-पदवीं मृद्धितमां समामवैत् ॥१९ ॥
श्रुतिमण्डितये कलापिनी-तनयासरणयाहृतच्छदम् ।
अनुशैलतटं परीं स्फुटं नयनाभ्यां ववतीकदम्बकम् ॥२० ॥
निजपुरन्त्रनिकामनिह्नवं, स्पृहयन् भीलरिवान्यसत्त्ववात् ।
प्रथमं पथि यत्नमास्थितश्शरणं न्यास्थदसावदक्षिणम् ॥२१ ॥
वृषभानुपुरं त्रिविष्टप-प्रतिमं सन्यदधायथा यथा ।
मिलितोत्कलिका तथातथा, प्रणयिन्यास्तरलीचकार तम् ॥२२ ॥
विहरत्पवनं लतालिभि-, पवनं कीर्तिसुतापदार्पणात् ।
बहुधोपवनं महीधरं, समया चोपवनं ददर्श स ॥२३ ॥
घननिर्झरपातशीतलान्, मृगनाभिव्यतिषङ्गसौरभान् ।
विततान् वनदेवतागृहा-निव संलक्ष्य ननन्द कन्दरान् ॥२४ ॥
चतुरोऽन्वहमेव पार्श्वगः सुबलोऽप्यध्ययनं[1] यदृच्छया ।
मिलितो न विवेद कृत्रिम-प्रमदाकारपरिग्रहं हरेः ॥२५ ॥
अमुनाऽध्वनि दूरतस्ततः परितः सौधनिरस्तचन्द्रिरम् ।
ददृशेऽसदृशेन रोचिषा, स्फुरितं श्रीवृषभानुमन्दिरम् ॥२६ ॥
अविरामविकासिनस्तरून्, सरसीः सन्ततफुल्लपङ्कजाः ।
शिखिनोऽपि च नित्यनूतना- नवलोक्यातितुतोष तत्र सः ॥२७ ॥

१. मार्गे ।

क्षितिभृत्सदनं शिरस्स्फुरत्- पृथुलस्वर्णघटं निभाल्य सः ।
उदयाचलमस्मरच्चिरं, शिखराग्रोपलसद्विभाकरम् ॥२८ ॥
पुरुरत्नविचित्रधातुभि, र्धुरि तस्य च्छुरितस्य भूभृतः ।
वरसान्वभिधामसंशयं, मनुते स्मावितथा मुपेत्य स ॥२९ ॥
स ददत् पथि मन्थरं पुर-श्चरण द्वारि निवारणाद्भिया ।
हृदि चैव दधत् प्रगल्भता, प्रविवेशाम्बरचुम्बि गोपुरम् ॥३० ॥
युगपद्विविध प्रयोजनै, र्विशतो निस्सरतश्च मण्डितान् ।
मनुजानवलोकयन्नसौ, मुदितोऽन्तर्निदधौ पुर. पदम् ॥३१ ॥
क्रमश पटभूषणादिभि, प्रचिता शाश्वतभोगसाधनै. ।
विपणीः समवेतसन्मणी, रमणीया रमणीवदैक्षत ॥३२ ॥
क्वचनैक्षत चित्रलेखिनो, रुचिरस्वप्रचनाकृतोऽन्यत ।
इतरत्र परार्ध्यगान्धिका-नपि ताम्बूलिकपुङ्गवान्क्वचित् ॥३३ ॥
सरलाश्चलतर्णका स्रवत्-पयस पीनकुचा. समर्चिता ।
सुरभीरिव सौरभेयिका, परितोऽपश्यदसौ सहस्रश ॥३४ ॥
ककुद शिखरोन्नतं शिरः, सुविषाणा गलमात्तघण्टिकम् ।
दधदौक्षकमत्र वीक्ष्य त न्निनदं सम्मुमुदे च सोऽधिकम् ॥३५ ॥
उपघोषमवेक्ष्य घोषिण, स्फुरतो राधिकया प्रसाधितान् ।
अथ वत्सतरानमीषु तत्-प्रणयं सोऽपरिमाणमन्वमात् ॥३६ ॥
युवकान् विपुलान् खलूरिका[1]-वलये मल्लकलाविलासिन ।
पृथुलप्रघनान् घनध्वनी, नयमालोकत कौतुकात् क्षणम् ॥३७ ॥
अलिकादलकापसारणा-मपदिश्यंप शय निवेशयन् ।
शकुन जनसङ्क्षये मुहु स्फुरणा दत्तदृशो निजुहुवे ॥३८ ॥
अनुवीक्ष्य पुर प्रसादवान्, विलसन्नित्यवनीनमङ्गलाम् ।
नगरी वरसानुभूमिभृन्नृपतिद्वारमसावमाधयत् ॥३९ ॥
नग्निार्थयितुं निजेक्षणे दयितावक्त्ररोरुहेक्षणात् ।
सदन सदनन्तवैभव, वृषभानोरनु सोऽञ्जसाऽविशत् ॥४० ॥
इह धामनि वार्षभानवी मतिसीमानमवेक्ष्य सम्पदम् ।
जगतीश्वरमूर्त्तिरप्यसौ, कियती कालकलां विसिष्मिये ॥४१ ॥

---

१ मल्लप्रनभूमिमण्डले ।

महनीयपरस्परातिथि-व्रजमत्कारपयपत्र बहिः ।
प्रगमन् वृषभानुमन्दिरा-दविशल्योऽन्तरतर्कित शनैः ॥४२ ॥
निलयान्तरसौ यशोमती-मिव गव्यस्ववहारतत्पराम् ।
निभृतं प्रगनाम दूरतः सुतवात्सल्ययुक्ता कलावतीम् ॥४३ ॥
दयितास्यपिपासया दृशो, नगनघूर्मिचलीकृतान्तरः ।
वृषभानुसुतानिकेतनं, ललितारामवृत जगाम सः ॥४४ ॥
स निमेषविशेषितान्तरो-ल्ललितानुक्रमगर्भनिवेशितान् ।
युवती नवनीतकोमला, कमनीयामवनीपुलोमजाम् ॥४५ ॥
निधिमद्भुतशीलसम्पदः शुचिलावण्यमहानगे खनिम् ।
स्वमनोहरिणस्य धावुय-व्रजतासानिव पुष्पधन्वनः ॥४६ ॥
अमृतांशुहिरण्यकेशकौ सुषमासारैरिव मिश्रितैर्मिथः ।
रचितावयवामनीक्षिता-मिह दोषैं दयिता न्वबीभलत् ॥४७ ॥
सुषमामिव दर्शिताकृतिं, सुदतीं पर्वसुधाकराननाम् ।
निमिषाभयोरिवेकता, स्फुटदिन्दीवरसुन्दरच्छविम् ॥४८ ॥
वरामीमिव लोलवल्लरीं, मुहुरान्दोलितकर्णभूषणाम् ।
विशती भवने ददर्श तां प्रमदा कामपि कीर्तिबालिकाम् ॥४९ ॥
इयमेति किमिन्दिराऽम्बिका, नवनेन्दीवरश्यामयोगतः ।
धरणीनतचारिणी किमु शृङ्गाररसाधिदेवता ॥५० ॥
वपुरेकतमाम-मानवं, दधती किन्नु कलिन्दनन्दिनी ।
अथवा स्वयमीश्वराम्बिका, जगत्सम्मोहनशक्तिरीश्वरी ॥५१ ॥
हृदयं सहसा हरत्यसौ, प्रथमं दर्शनमात्रकः कथम् ।
दयितं मम नन्दनन्दनं, कमनीय- प्रभयाऽनुकुर्वती ॥५२ ॥
इति यावदजसमुत्सुका, वृषभानोर्दुहितः व्यतर्कयत् ।
[illegible] ॥५३ ॥
नयनानि परस्परं तयो-रपि दृष्टान्मिलितानि रहसा ।
सविरोधमनश्वरं मना-मनुरागमनिशमनिन्दुरे ॥५४ ॥
अनुभावमदीनवेशस्य तां विषया मूर्तिमनीमिवाद्भवीम् ।
स्वयमालिजनैः समं मुदा, त्वरितं प्रत्युदियाय राधिका ॥५५ ॥
शुचि मानसमासनं नितं, पुनरार्घ्यं प्रमदाम्बु निर्मलम् ।
नयनाम्बुजमर्घ्यमादरे-न्मधुपर्कं मधुरं ववच सा ॥५६ ॥

प्रतिपत्तिपरा कलावती-तनया तुल्यनयादतित्वरम् ।
सविलासमुपाजिहानया, प्रतिसम्भावनयाऽऽर्च्यतानया ॥५७ ॥
परिचित्यनुपक्रमेऽपि सा, बहुशाखामतुलामकारणाम् ।
इह *कीर्तिसुता सखीकृतां, परिचर्यामवधार्य विस्मिता* ॥५८ ॥
उपवेश्य मनोरमासने तदनु क्षीणपथिश्रमामिमाम् ।
ददती प्रणयेन वीटिकां, समपृच्छत् सुबलस्वसा स्वयम् ॥५९ ॥
सखि ! धन्यतमाऽस्मि सर्वथा, यदभूद्भमयि तावकी दया ।
अथवा महतामहैतुकी, सकलानन्दविधायिनी क्रिया ॥६० ॥
स्वयमेव ददाति दर्शनं, स किमाह्वानमपेक्षते विधुः ।
जगदेत्य सुखाकरोति वा, पवमानः किल केन याचितः ॥६१ ॥
चिरचिन्तनयाऽप्यद क्षमं, सुकृतं न स्वकृतं स्मराम्यहम् ।
अनुमापयतीदृशं पुनः फलमेवोपनतं तदञ्जसा ॥६२ ॥
दृगसेचनकं वरानने ! तदिदं शसति रूपमेव ते ।
अपि कर्णरसायनं स्फुरत्-स्मितपीयूषपरिष्कृतं वचः ॥६३ ॥
मम तावकदर्शनप्रदं, नहि सौभाग्यमभूत् कदापि यत् ।
अभिधाप्रभृतेः पिपृच्छिषा, परिचेतुं तरलीकरोति तत् ॥६४ ॥
कृपयाऽसि ययाऽभ्युपेत्य हा, चलनक्लेशमियन्तमागता ।
न तयाऽगणयन्त्यनौचितीं, त्वरितं दास्यसि
देवि ! संस्तवम् ? ॥६५ ॥
करुणामयि ! यस्तवादिमा -दपि साक्षात्करणात्समुत्थितः ।
स हि साहसिकः प्रसूयते, मम विश्रम्भभरोऽत्र चापलम् ॥६६ ॥
इति मञ्जु निशम्य सादरं, प्रणयार्द्रं मृदु राधिकावचः ।
स्मितपूर्वमपूर्वमाधुरी -निधिगम्भीरमसावुदाहरत् ॥६७ ॥
अयि वल्लवराजबालिके ! कथमित्थं मयि तावकी भ्रमः ।
अतिसीम तनोषि गौरवं, स्वविधेयेऽपि जने यदीदृशम् ॥६८ ॥
नियतं भवदीयजन्मना, सखि ! धन्यो वरसानुसानुमान् ।
अपि पुण्यवती कलावती, वृषभानुः सुकृती च गोपराट् ॥६९ ॥
सुषमामसमामुदारतां, सरलत्वं च तवाङ्ग ! शृण्वती ।
अपि तर्पयितुं भृशं दृशौ, कुतुकाक्रान्तमनाः समासदम् ॥७० ॥
सुभगे ! त्वमये यथाश्रुता, न तथैवापितु सर्वथाऽधिका ।
गुणरत्ननिधिं निरीक्ष्यसे, न महत्ख्यातिरुपैत्यसत्यताम् ॥७१ ॥

अभिधाद्यनतिप्रयोजनं, सरले ! पृष्टमपि त्वया पुनः ।
कथयाम्यखिलं यथायथं, प्रियनिर्बन्धमपाकरोति कः ? ॥७२ ॥
सखि ! नन्दनिकेतनादुदङ्, मम नन्दीश्वरपर्वते गृहम् ।
विदितौ च मदेकसन्ततौ, जनकौ भक्त्यनुरागनामकौ ॥७३ ॥
परपुष्टनिभामलक्षणामपि वात्सल्यभरेण शैशवे ।
गुरुभिर्विहितेन विद्धि मा-मभिधानेन तु गोपदेवताम् ॥७४ ॥
प्रणयेन पणेन मामये !, त्वमसि क्रीतवती यदञ्जसा ।
अहमप्यनुयोक्तुमीप्सित, किमतो नाधिकरोमि राधिके ! ॥७५ ॥
तनुरङ्ग ! तनु विलोचने, स्तिमिते निश्वसितं च मांसलम् ।
परुपेन्दुकुमारिके ! कुत-स्तव मध्यैपिजनान् प्रबाधते ॥७६ ॥
अयि यद्यपि पद्वि ! भूयसी-मवहित्थां कुरुषे व्रजेन्दिरे ।
स्फुटमान्तरिकी कदर्थना, कथयत्येव तथापि ते वपुः ॥७७ ॥
न दशा क्वचिदीदृशी भवे-दनुरागोरगदंशनं विना ।
तदपाकुरु संशयं प्रिये ! तपगः कश्चिजगज्जयी युवा ॥७८ ॥
इति तां युवतीमतन्द्रिता, द्रुतमादाय करे सकौतुकम् ।
स्मितवक्त्रसरोरुहा रह-स्थलमानीय च कीर्तिजाऽब्रवीत् ॥७९ ॥
सखि ! धन्यतमासि या पुन, प्रतिवेशे वससि व्रजेशितुः ।
नयने फलिने वितन्वती, सततं तत्तनयास्यदर्शनात् ॥८० ॥
इयती क्व गुरोरशिक्षथ, वद कस्मादभिधानचातुरीम् ।
अमिता च तवेङ्गितज्ञता सखि ! विस्माययति प्रसह्य माम् ॥८१ ॥
ननु नन्दपुरे प्रजापते-रनुकम्पा महती प्रतीयते ।
सखि ! येन स तत्र निर्मिता, सुषमाकोपमशेषमत्यजत् ॥८२ ॥
अपरं हृदयं त्वमेव मे, भवसि प्रेयसि ! निर्मलं यतः ।
कथमस्तु ततस्त्वदप्यरो, सुनरां किञ्चन जातु निह्नुतम् ॥८३ ॥
यदवध्यवलोकितो मया, क्षणमेवाध्वनि नन्दनन्दनः ।
तदवध्ययि साध्वि ! नश्वना-मतनुर्मामुपनेतुमीहते ॥८४ ॥
अवलोक्य गवानुसारिणं, मुरलीवादिनमम्बुदच्छविम् ।
तमखण्डशिखण्डमण्डनं, मनसो न प्रभवामि शोभने ॥८५ ॥
स्मरदस्रपुरूरवोमुखा, विमुखा यस्य तुलाधिरोहणे ।
तमवेक्ष्य जगत्त्रयेऽपि वा, विवशा का न भवेन्नितम्बिनी ॥८६ ॥

त्वयि विश्वसिमि प्रियम्वदे ! करुणां द्रागपि वा करोषि चेत् ।
ध्रुवमेव स महामर्पये- न्निजदास्यं कुशले ! प्रियस्तदा ॥८७ ॥
इति साधु निपीय तद्वच, समुदाऽपि प्रणयं रीक्षितुम् ।
कृतकं विमनायमानया, पुनरूचे वृषभानुजाऽनया ॥८८ ॥
अहह व्रजराजनन्दिनि ! प्रसृताऽसि स्फुटमुत्पथे कथम् ।
किमु हारधिया सितोरगं, तरले ! हन्त गले निधित्ससि ॥८९ ॥
क्व स हिंस्रतमस्तम प्रभ-श्चपलो गव्यदुकूलतस्कर ।
क्व च गेयदया हिरण्यभा, स्थिरधी शीलवती !त्वमुत्तमे ॥९० ॥
प्रतिवेशितयाऽस्मि शैशवा-दखिलं वेद्मि यतोऽस्य चेष्टितम् ।
तदितो भवती निवर्तये, सुहृदो हि प्रतिवारिणोऽहितात् ॥९१ ॥
इति निश्चलनिश्चया सुहृ-द्वदनाद्दुर्तुरनर्हगर्हणाम् ।
प्रतिपद्य सपद्यनिन्दिता, व्यथिताऽभापत वार्षभानवी ॥९२ ॥
अलमालि ! गिरां श्रमेण ते, मयि तस्मै विहितप्रतिश्रुतौ ।
वरमर्हमनर्हमेव वा, कुलकन्याऽभ्युपगत्य का त्यजेत् ॥९३ ॥
अयि ! योजयितु त्वमर्थिता, हृदयेश विरहार्तया मया ।
किमिद चपले ! मुधाऽभ्यधा, पतिनिन्दा कुलजा
शृणोति का ? ॥९४ ॥
स्फुरिताधरपल्लवा जवा-दिदमुक्त्वैव तत पराङ्मुखी ।
रुदती वृषभानुजा रुजा, व्यलपत्कान्तवियोगजन्यया ॥९५ ॥
जगदीश्वर ! जानतोऽपि ते, जनमेतं त्वदधीनजीवनम् ।
करुणाकणिकाऽप्युदेति न, प्रतिरुन्धे मदभाग्यमेव वा ॥९६ ॥
अपि कल्पय तात ! यातनां, किमु कीनाश ! वृथा विलम्बसे ।
हृदयेशमथो यथाऽऽप्नुया-मपरेणाप्यचिरेण जन्मना ॥९७ ॥
व्रजचन्द्र ! गिरीन्द्रभृत् ! प्रभो ! प्रियसर्वज्ञ ! दयापयोनिधे !
प्रणतिं चरमामिमामपि, प्रतिगृह्यानुगृहाण दासिकाम् ॥९८ ॥
इत्थं चिराय परिदेव्य भृश निशाया,
चक्रीव सा दयितसङ्गमने निराशा ।
स्वैरं विमोक्तुमफलान् प्रसिता निजासून्,
मूर्च्छत्तरव्यसनभारवशादमूर्च्छन् ॥९९ ॥

घृत्वा दयाद्रुतमति र्द्रुतमात्मनैव
कान्ता परीक्षितरति सहसा पतन्तीम् ।
आरोप्य वक्षसि विमर्शसुखेन सञ्ज्ञा-
मानाय्य सूक्तिसुधयाऽमदयच्च कृष्ण ॥१००॥
अयं 'मायादेवी'-सुकृति-पटली-मौलिमहित-
प्रथी-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचित- ।
सुकाव्ये मञ्जूषा[1]-सहजनुषि राधापरिणये
गुणै पूर्ण सर्गो विरतिमततात्पष्टि[2]-
पितभाक् ॥१०१॥

*इति श्रीराधापरिणय-महाकाव्ये कृष्णाङ्के 'कैतवसमागमो' नाम सप्तदशः सर्गः ।*

१ अलङ्कारसर्वस्वटीका ।
२. सप्तदश ।

*॥इति प्रभाया सप्त*

# अथ 'परिणय-प्रमोदो' नाम
## अष्टादशः सर्गः

अथ[1] व्रजाधीशसुतः सवित्रा, युतस्तमर्तुं प्रसमे कदाचित् ।
वृन्दावनं नन्दनसुन्दरं गाः, कृत्वा पुरोगाः कुतुकादगच्छत् ॥१ ॥
गव्या-खुरोद्धूतरजः परीतं, प्रसन्नमास्यं मधुसूदनस्य ।
स्फुटं मरन्दच्छुरितं सलीलं, नीलारविन्दं नितरामनिन्दत् ॥२ ॥
राधाऽनुसन्धानपरोऽप्यऽदभ्रं पितु र्निदेशाध्वनि सावधानः ।
चलाचलाः स्निग्धरवेण धेनू-स्तनूनसङ्गाः समकालयत् सः ॥३ ॥
अग्रेसरीमेव वितर्क्य कान्तां, कदापि धर्तुं निरघौ पदे द्राक् ।
समाहितान्तःकरणोऽथ तातात् भयानवाप्य व्यजहत्स मन्दम् ॥५ ॥
प्रागेश्वरीसन्ततभावनोत्थं, मुहुर्मुहुः स्वं गतिभङ्गमेव ।
विलोलधेनूरनुयन् प्रगोप्तुं, प्रभूर्बभूवापि पितुः समक्षम् ॥५ ॥
मुदोच्छलद्वत्सकदम्बमध्ये, मुहुः प्लुतं पृष्ठचरः पयोयान् ।
स्वयं स रक्षन् पितरं प्रयासात्, सम्यक् सदम्भो गमयाम्बभूव ॥६ ॥
यदीक्षतासौ वरसानुशृङ्गं, विवर्तितग्रीवमनेकवारम् ।
विवेद न द्रागपि तद्रहस्यं, दृष्ट्वाऽपि नन्दः सरलः प्रकृत्या ॥७ ॥
तरङ्गितोत्साहभरो नवीन-स्फूर्तिः परं संहतगात्रबन्धः ।
गवानुसारी प्रभुरप्रमादो, ययौ युवेव स्थविरोऽपि नन्दः ॥८ ॥
यूथं पुरस्तादपि गवामवापद्, वृन्दावनं तोयदसन्निकाशम् ।
विशङ्कटं पाण्डुतरस्विव तूर्णं, तरङ्गिणीनामिव वारि सिन्धुम् ॥९ ॥
क्लान्तामयूखैः पथि सप्तसप्तेः पीनाः पदं मन्थरमादधानाः ।
छायास्तरूणामधिगत्य शीताः, विशश्रमु काननसीम्नि गावः ॥१० ॥
शृण्वन् कलं कूजितमण्डजानां, निषेवितः शीतलवन्यवातैः ।
ससूनुरासन्नविशालशाल-मूलेऽनुकूले निषसाद नन्दः ॥११ ॥
खिलीकृतायामपि चारुतायां, ग्रीष्मेण वृन्दाविपिनस्य तावत् ।
वैचित्र्यमत्राकृतकं परेभ्यो, नन्दीश्वरेन्द्रः कलयन्ननन्दीत् ॥१२ ॥
तृषार्दितान् पल्वलवारिशोषात्, ससम्भ्रमं सम्भ्रमतः समन्तात् ।
जन्तून् समन्तूनवसाय वन्या-न्नैक्षिष्ट पाथोदपथं न वन्ध्या ॥१३ ॥
उदीर्णनृत्तोत्कलिकाः कुतश्चित्, केकाविकासोन्मुखतां दधानाः ।
प्रतीक्षमाणा प्रणयेन तस्थुः शिखावला स्वागतमम्बुदानाम् ॥१४ ॥

---

१. इत १०० श्लोक यावदुपजातिच्छन्द ।

प्रस्यन्दमानोरुमरन्दहाला, सुगन्धिनिर्धूतलसद्रसाला ।
आसीत्स्फुटाऽऽकारितभृङ्गजाला, सङ्गीतिनी क्वापि च शालमाला ॥३० ॥
मनोरमामोदभरेण पुष्प-स्तोमेन रोलम्बसमादरेश्च ।
परैव यस्मा लतिकान्तरेभ्यः, सापि क्वचिन्मालतिका चकाशे ॥३१ ॥
पान्थाप्रियोऽपि प्रियक, कुतश्चिद्, वियोगिहन्ता वत जीवकोऽपि ।
आवर्जितप्रेक्षकतर्जनीक, सर्जो व्यराजत्सुमसुप्रतीक ॥३२ ॥
सुवासवृक्षान्तरभङ्गजाग्रद् यशोभिरुल्लासिसितप्रसूनैः ।
नाम्ना च पार्थोदविनोदकाले, तथाऽर्जुनो दृष्टिपथागतोऽभूत् ॥३३ ॥
क्वचित्समीपे गिरिगह्वरस्य, पयोमुचो गर्जितमूर्जितं तत् ।
प्रतीपशङ्कापरिकोपि-माद्यत्-मृगेन्द्रनादस्य निदानमासीत् ॥३४ ॥
किमाज्ञया मन्मथभूमिभर्तु र्वर्षर्तुरुद्भासितडित् प्रदीपम् ।
घनाम्बुभृद्वृन्दवपु र्व्यतानी-न्नाभोऽङ्गने नीलबृहद्वितानम् ॥३५ ॥
नभोऽङ्गनेऽम्भोदवितानभाजि, स्फारस्फुरद्गर्जितवाद्यनादे ।
पटीयसी चेतनचित्तचौर्ये, नटीव नृत्तं चपला चकार ॥३६ ॥
आच्छादयद् व्योमरणाङ्गणं स्राग्, बकावलीराजतशृङ्खलाभाग् ।
अम्भोमदा दुर्निनदा स्मरे ना, सम्पाऽङ्कुशा वारिददन्तिसेना ॥३७ ॥
आडम्बरं वारिदमण्डलस्य दृष्ट्वा विशिष्टं पशुपालनाथः ।
कुतोऽपि हेतो पुनरुन्नचित्तं, व्रजोपरि क्रुद्धमशङ्कतेन्द्रम् ॥३८ ॥
श्रौतं विधानं प्रियया तनोऽथ, सयोजनेच्छामुपलक्ष्य धातुः ।
अस्पृष्टभीरप्युपतातमुच्चैरचेष्टत त्रस्नुवदस्य पुत्रः ॥३९ ॥
शुष्यन्मुखो वत्सलिमातिरेक-क्लिन्नान्तरो वेपथुधूतधैर्यः ।
स विस्मरन् स्व तनयस्य शश्वत्, त्राणप्रकारं परमन्वियेष ॥४० ॥
पुरेव तद्वज्रधरोपसर्ग-सम्भावना तस्य मुमोष धैर्यम् ।
दैवौकसोत्पातसमागमे स्याद्, धीरोऽप्यधीरः किमसावभीरः ॥४१ ॥
न रक्षणोपायमपश्यदन्य, सूनोर्व्रजप्राणणमन्तरेण ।
न चोपले भे मनुज परं यस्त्रायेत धेनूर्वनविप्रकीर्णाः ॥४२ ॥
विहस्तधी नैकविधं विधानं, शशाक नाश्वासयितुं तनूजम् ।
मज्जंस्तदुत्पातमहाम्बुराशा-वासादयामास न चावलम्बम् ॥४३ ॥
तावद्वियोगाद्व्यथितत्र्यताया, निदेशतो वाऽभिमुखस्य धातुः ।
एकाकिनी सत्त्रिदर्था सखेल, सन्निन्वनी तत्र सुमानि राधा ॥४४ ॥
विलोक्य तां गोकुलनाकभर्तु -राशामभूमामवाप चेतः ।
आकस्मिकमाग्न्यसरेऽसहायं, सुखाकरोति स्वजनोपलब्धिः ॥४५ ॥

उपागतां वन्दनतत्परानान्ता-मधोदृशं दर्शितनिघ्नभावाम् ।
आतङ्कमोदोर्म्युपरुद्धकण्ठः, कथञ्चनाभीरविभुर्बभाषे ॥४६ ॥

कल्याणि ! भाग्यात् त्वमुपस्थिताऽसि, प्रनष्टदृष्टेरिव मेऽत्र यष्टिः ।
वर्षीयसः पुत्रि ! कुरूपकारं, नयाच्युतं विभ्यतमेवमोकः ॥४७ ॥

इतीष्टमादेशमभीरभर्तुर् गभीरहृत्तं शिरसाऽभ्युपेत्य ।
आकुञ्चिताङ्गी स्मितवक्रवक्त्रा, राधा मुकुन्दं कथमप्यगृह्णात् ॥४८ ॥

समर्प्य कृष्णं वृषभानुजायै, गुणानुभावातिशयश्रुतायै ।
अभीरभीरप्रभुरप्रमत्त-स्त्राणे गवामेव बभूव यत्तः ॥४९ ॥

व्रजेशितुर् दृक्पदवीमतीतः, प्रसारिगुल्मान्तरितो मुकुन्दः ।
विहाय बाल्योचितभीरुभावं, प्रागल्भ्यमाधात्तरुणत्वयोग्यम् ॥५० ॥

अप्युत्सुकावालपितुं मिथस्तौ, ह्रिया स्वभावोद्भवया निरुद्धौ ।
दृष्टी तयोश्चाप्यतिबद्धतृष्णे, न शेकतुः सङ्घटितुं कथञ्चित् ॥५१ ॥

अन्योन्यजाग्रत्तररागभाजो, भुजौ स्फुरन्तौ पतितुं प्रियांसे ।
सम्मेलने प्राथमिके नवीनो, विश्रब्धभावः प्रसभं न्यषेधत् ॥५२ ॥

परस्परं तौ प्रतिपत्तिरक्षा-परायणावप्यतिमात्रमुत्कौ ।
गूढं दृशाऽऽकेकरया पिबन्तौ, प्रियास्यचन्द्रं, ययतुः समौनम् ॥५३ ॥

इत्थं पथि प्रस्तुतनैकभाव-व्याक्षिप्तचित्तं चलतोः सहैव ।
अजस्रमालोककविस्मयाय, बभूव योगेऽपि तयोर्वियोगः ॥५४ ॥

समीहितं सङ्घटनोन्मुखं त-मर्थं समर्थः प्रणिधानयोगे ।
अवेत्य हृष्यन् सहसा स्वलोकाद्, राजीवजन्माऽवततार भूमिम् ॥५५ ॥

वृन्दाटवीपद्धतिमध्यवर्ती, प्रतीक्षमाणः क्षणमिष्टदेवौ ।
गन्तुं व्रजन्तौ समया व्रजन्तौ ददर्श हर्षस्तिमितः स्वयम्भूः ॥५६ ॥

यावद्विधिं तं परिचित्य राधा-हरी विनीतौ विनतौ भवेताम् ।
भालेश्चतुर्भिश्चतुरः स तात्र-च्चत्वारि पस्पर्श तयोः पदानि ॥५७ ॥

आवर्ज्य तथ्यं मधुरं वचोभिः, द्युशिल्पिसन्निर्मितमण्डपं सः ॥
निनाय भाण्डीरवनं विवाह-संस्कारसिद्ध्यै युगयुग्ममेतत् ॥५८ ॥

पीठे प्रतिष्ठाप्य वरं विरिञ्चि-स्तत्राथ पूर्वाभिमुखं मुकुन्दम् ।
हिमाचलः शम्भुमिव प्रयत्नादानर्च पाद्यप्रमुखोपचारैः ॥५९ ॥

तद्दक्षिणेनाथ वधूं निधाय, प्रजापतिः सङ्कुचदङ्गवल्लिम् ।
राधामसाधारणशीलशोभां, ददौ प्रसीदन् मुदिताय तस्मै ॥६० ॥

इन्दीवरे कोकनदं नतोऽपि, स्यात्पुण्डरीकं यदि चात्र पद्मम् ।
सकृष्णराधाकरसन्निगद्वस्थे स्थितं तदा धातृहाय विनिन्देत् ॥६१ ॥

प्रियाकरस्पर्शसुखाम्बुराशौ, पद्मेक्षणो मङ्क्षु मिमङ्क्षुरेष ।
पुरः सुरज्येष्ठगरिष्ठलज्जा-तटीं पटुर्लङ्घितुमेव नाभूत् ॥६२ ॥
दाता विधाता प्रथमस्तपस्वी, राधा प्रदेया वनिताविभूषा
प्रतिग्रहीता पुरुषोत्तमश्च, परा निनायोपयमः प्रतिष्ठाम् ॥६३ ॥
पितामहोऽप्येष सुतः स्वयम्भूः, स्रष्टा स्थवीयाञ्जननी च कन्याम् ।
राधा परस्मै पुरुषाय पित्रे, यवीयसेऽदाद्धरयेऽतिचित्रम् ॥६४ ॥
स्वर्गास्पदोऽकामयत स्वयं यत् कन्यापितुः केवलमेष नाकम् ।
मन्ये तदन्येऽप्यधुना तमेव सर्वेऽनुकुर्वन्ति हि तद्वदान्याः ॥६५ ॥
प्रक्रान्तकन्याद्भुतरत्नदान-कर्मप्रतिष्ठापनमिच्छुरस्मै ।
सरोजभूः स्वर्णमयीमनर्घ्यां, स दक्षिणामुत्पुलको व्यतारीत् ।६६ ॥
समीक्षणश्रेपमवाप्य धातु-श्चातुर्यभाजावकृतान्यपृष्टी ।
तृषोत्तरङ्गे बहु धावमाने, तयोर्मिथः सम्मिलतः स्म दृष्टी ॥६७ ॥
राधाद्दगम्भोरुहयो विकासो, युक्तो मुकुन्देक्षणसूर्यसङ्गात् ।
ससर्ज तत्कौतुकमस्तमानं, बभूव यत्तत्र परस्परं सः ॥६८ ॥
आदाय दक्षेण करेण कान्ता, स्निग्धालकान्ता विधिना नियुक्तः ।
स मण्डपादीशदिशि प्रवीण-प्रकल्पितामाशु विवेश वेदिम् ॥६९ ॥
त्रयीनिदानं तपसा निधानं, सनातनाचारचणः पटीयान् ।
प्रारब्धसंस्कारविधौ विधाता, पुरोहितोऽमुष्य पुरोहितोऽभूत् ॥७० ॥
व्यधायि तत्राब्जभवेन पूर्वं, भूसंस्कृतिः सञ्ज्वलनोपधाना ।
स्थिते वृते ब्रह्मणि साक्षिभूते, होमश्च पश्चात्समिदाज्यलाजैः ॥७१ ॥
प्रजापतिः स्वावसरे विलक्षं वक्तुं निजाख्यामनुसृत्य कृष्णः ।
मूकोऽजुहोत्तेन तदादि मन्ये, तदाहुतेर्मौनि-विधेयताऽभूत् ॥७२ ॥
अश्मानमारोहयता जनी तत्- पादाङ्गुलीं संस्पृशतैव नूनम् ।
अशिक्षि माने हरिणा भविष्य-त्तदङ्घ्रिपद्मग्रहणप्रकारः ॥७३ ॥
समन्त्रवादं विधिकारितायां, प्रदक्षिणं वह्निपरिक्रमायाम् ।
मायापतिर्नन्दसुतोऽनुवारं, पदानि सप्तानुजगाम जायाम् ॥७४ ॥
सीमन्तदेशे वरसन्निवेशे, भङ्ग्या विभक्ते वृषभानुजायाः ।
शमीशणस्वर्णमुखैः सनाथं, सिन्दूरमानन्दघनस्ततोऽदात् ॥७५ ॥
तदा विवाहस्य रहस्यभावात्, तौर्यत्रिकं यद्दिवि नैव जातम् ।
अपूरयस्ता त्रुटिमव्यलीका, विभाव्य देवा दिवि नैकधा तत् ॥७६ ॥
स्वायुष्यसौभाग्यसमर्थकाशी-र्वचः समुच्चार्य चतुर्भिरास्यैः ।
दूर्वाक्षतानक्षतधर्मतेजाः, पितामहोऽधादित दम्पतिभ्याम् ॥७७ ॥

जगत्सवित्रोरनयोर्विवाहो, हास्याय लोकस्य भवेदिदानीम् ।
इत्येष नूनं समपादयत्तं, वेधा रहस्येव पुराणविज्ञः ॥७८ ॥
इत्थं तमुद्वाहविधिं यथावत्, सम्पाद्य राधाऽच्युतयो र्विनम्रः ।
अद्वैधमेधानिधिरादिविद्वान् प्रकामभस्तौच्चतुराननस्तौ ॥७९ ॥
सुवर्णगौरीं घनमेचकाभ, नीलाम्बरां पीतदुकूलभाजम् ।
बिलम्बिवेणि लुलितालक त्वां, नमामि राधां मधुसूदनञ्च ॥८० ॥
ज्योत्स्नेव चन्द्रस्य विभेव भानो-स्तडिल्लतेवाम्बुधरस्य राधे ।
त्वमेव मातः वितनोषि लक्ष्मीमङ्केस्फुरन्ती शकटान्तकस्य ॥८१ ॥
त्वां ब्रह्म साक्षात्सुरूपं गिरीश, विष्णुं दिनेश गणप गृणन्ति ।
मुकुन्द ! विद्यां प्रकृतिं भवानीं, रमां प्रभां सिद्धिमिमान्तु धीराः ॥८२ ॥
पुरोहितोऽहैतुकताप्रशस्तामीशौ ! भवद्भक्तिमभावि भङ्गाम् ।
एतावतीमेव जगद्विरक्तः, स्वदक्षिणामर्थयते जनोऽयम् ॥८३ ॥
इतिब्रुवन्नेव नतः स्मिताभ्यां, ताभ्यां वितीर्णामुपलभ्य भक्तिम् ।
ध्यायन्नमू मोदजलार्द्रनेत्रो, व्रज कथञ्चिद्विजहौ विरिञ्चिः ॥८४ ॥
अनन्त-भव्यप्रभवेऽत्र काले, बालेन्दुवक्त्रां परिणीय राधाम् ।
इयेष निर्वापयितुं विशाले, कालेयरुक् कुञ्जगृहे स्मराग्निम् ॥८५ ॥
स्मेरां मनाक्कुञ्चितवक्त्रसरोजा-मधोमुखीं सोऽञ्चितरोमराजिम् ।
कपोलयोः स्वेदवतीमनर्पी-दभ्यन्तरं प्राणसमां समानम् ॥८६ ॥
करे गृहीता सहसा प्रियेण, चित्रीयमाणा वृषभानुपुत्री ।
अभूतपूर्वस्य तु साध्वसस्य, क्षणं विहस्ताऽनुबभूव भारम् ॥८७ ॥
त्वरात्मनाऽलं मनसेर्यमाणमपीदमीयं नयनं कथञ्चित् ।
प्राणेश्वरं सन्निहितं न पातुं, शशाक लज्जागुरुपक्ष्मरुद्धम् ॥८८ ॥
साहाय्यमालीपटलस्य तस्मिन्, दशान्तराले परमीहमाना ।
इतस्ततः प्राक्षिपदुत्सुकाऽसौ, प्रोप्टीविलोलं नयनाब्जयुग्मम् ॥८९ ॥
उद्दामसात्त्विकभावतापप्लुतौ स्नेहप्लुतस्तन्मनसोऽतिसौम्यम् ।
प्रवर्त्यमानामपि पङ्कजाक्षीं न्यवर्तयत्तां जडिमा-विलासात् ॥९० ॥
त्रपानुरोधेन मनोभवस्य प्रधानमादेशमुपेक्षमाणम् ।
जडं विधेयान्यतमः प्रचण्डः कम्पः पराभूद्धृदयं तदीयम् ॥९१ ॥
निजे श्रुती तर्पयितुं प्रियेण, वचोऽमृतैः किञ्चन भूरिपृष्टा ।
राधत्रपस्यन्त्यपि सा नतास्या, न वाचमुच्चारयितुं क्षमाऽभूत् ॥९२ ॥
नवोढभावाधिकराज्वलज्जा-बाल्यावसानोदितमानकेल्योः ।
स्त्रीपुंसयो र्विद्विषतोरभीक्ष्, बभूव राधाहृदये समीकम् ॥९३ ॥

प्राणान् पणीकृत्य हठेन युद्ध्वा, भग्ना चिरेणापससार लज्जा ।
रत विहाय प्रधने प्रसिद्धो, न पुञ्जय- क्वापि नितम्बिनीनाम् ॥९४ ॥
निवेशिता सानुनय प्रियेण, पटीयसा तल्पतले कृशाङ्गी ।
नतभ्रु साचीकृतकन्धरं सा, तमक्षिकोणेन मनागपश्यत् ॥९५ ॥
छकसूचिसम्पादितरोकमित्थ, मन्दाक्षसेतु सहसैव भित्त्वा ।
प्रावर्तत प्रीतिसुधास्रवन्ती-समृद्धवेणिश्चलितु पुरोऽस्या- ॥९६ ॥
वैलक्ष्यकारानिलयाद्विमुक्ति-मासाद्य भाग्येन तदिन्द्रियाणि ।
चिरात्सतृष्णानि निदेशभिक्षो प्रिये स्वतन्त्राण्यचरन् यथास्वम् ॥९७ ॥
चटुप्रकारै विविधोपचारै- प्रेमोपहारैश्च जलाद्विदग्धा ।
विश्रब्धभाव गमिताऽतिमात्रं, पटीयसेय शकटान्तकेन ॥९८ ॥
अनन्तर मन्मथतन्त्रनिष्णौ, भृश सतृष्णौ रहसि प्रतीतौ ।
नवोल्लसद्यौवनयोगयोग्यान्, व्यातेनतुस्तौ विविधान् विहारान् ॥९९ ॥
उद्दामकेलिप्रसृते चिरेण, प्रत्यग्रसम्मोहभरे विशीर्णे ।
सम्भावयन्ती प्रतिप सावित्रो-रपि श्लथाङ्गौ ययतुर्व्रजंतौ ॥१०० ॥
निस्सृत्य कुञ्जभवनादवलम्बितांसा-
वन्योन्यमेकतरमात्रकरेण गाढम् ।
यान्तौ व्रज पथि विरम्य-विरम्य किञ्चित्
स्मेरावपक्रममिवालपता मुहुस्तौ ॥१०१ ॥
कथमपि गमयित्वा प्रेयसी द्रागणीमा
विरहमसहमाना सान्त्वनैस्तातगेहम् ।
स्वयमनुपदसङ्गोपायचिन्तासहस-
स्तिमितहृदथ कृष्णो मन्दमापोपनन्दम् ॥१०२ ॥
अथ 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रधी-'विद्यानाथ'-प्रभव-'वदरीनाथ'-रचित- ।
करिश्रेणीमानो नृपचरितचम्पूसहजनौ
महाकाव्ये सर्गो यतिमधृत राधापरिणये ॥१०३ ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के 'परिणयप्रमोदो'*
*नामाष्टादशः सर्गः ।*

# अथ 'दोलाविलासो' नाम
## उनविंशः सर्गः

अथ मुकुन्दमवेक्ष्य[1] रिरंसया, वनमितं तनुकान्तिसनाभयः ।
ममतयाऽऽतपवारणतामधु, समुदिता मुदिता गगने घनाः ॥१ ॥
जलमुचा वलितेन बलाकया, लसित-मौक्तिकमञ्जुतरस्रजः ।
कनकपिङ्गदुकूलभृतो हरे-रनुगता नु गता चपलारुचा ॥२ ॥
अरुणभूषण-पीतपटासित-च्छवितनोस्तुलनामघवैरिणः ।
रुचिरचापरुचाऽऽपशचीपते-रुदितयाऽदितया क्षणमम्बुदः ॥३ ॥
स मुदिरेण सपर्पयताऽमृत, मदनरोचकमेचकरोचिषा ।
भुवनतापमनारतसन्तत, विहरता हरताऽनुकृतोऽभवत् ॥४ ॥
न सुकरा प्रभुरूपविडम्बना, भुवि सता वत जातु लघीयसा ।
इतिघनेन मुकुन्दतनुद्युते-रनुकृता नु कृता स्थितिरम्बरे ॥५ ॥
हरिमिवोत्कयितु नवकेलये, सुरभयः शिशिराश्च तडित्लता ।
परिषदे शिखिना ध्वनता मुदा, मुमुचिरे मुचिरेण पय कणा ॥६ ॥
विविधवर्णतडित्पटलीजुषा, पवनपृष्ठचरेण पयोमुचा ।
ध्रुवमजीयत नैकभिदप्रभा-ध्वजवती जवतीव्रतमा चमू ॥७ ॥
तपनतप्तमवेक्ष्य जगत्तपे, जलधरेण दयाद्रुतचेतसा ।
क्षितिभृतामधिपस्य शिखाथल-ध्वनिहित निहितं शिखरे वपु· ॥८ ॥
कलितभङ्गकलापिगलच्छवि, व्यधित य· प्रथम शितिशृङ्गताम् ।
सलिलशालिवपु विपिनानल-व्यसनगं स नग मुदिरोऽसिचत् ॥९ ॥
जलधरप्रकरैरसितीकृतो, बहुरसो दिवसोऽत्र विलासिनौ ।
अकलयन्मिलितौ विरहोत्तरं विरतरं रतरंहसि लोलुपौ ॥१० ॥
मणिरिवान्तरितो घनवाससा, शुचिरिव च्छुरितो बहुभस्मना ।
अपिहितोऽत्र नवीनपयोभृता, न सविता सवितानमहा बभौ ॥११ ॥
अविरलासितवारिदसन्तते-रजनयत्यहनीह मनीषिभिः ।
सरसिजोत्करहासविजृम्भणादनुमिता ऽनुमिताऽत्र रविच्छवि ॥१२ ॥
विभुविशुद्धमनादि निरामयं कलितमायपरात्मवदाविलम् ।
न शुशुभे निचयेन पयोमुचां शबलितं वलितं तमसेव खम् ॥१३ ॥
किमभिसाररसेन समा समं विषमसायकसाधितमानसा· ।
परिदधु· परदर्शनभीरवो, दिगबलागबलाभघनाम्बरम् ॥१४ ॥

१. इत १० श्लोक यावद्द्रुतविलम्बितं छन्दो, यमकंच ।

निबिडवारिदवृन्दतिरोहिता कुजनतेव बुधव्रजवारिता ।
पक्खरभापटली नलिनीपते-रुपरता परतापनपाप्मन ॥१५ ॥
रमणवीविदकान्तसमागमा-दिव विदग्धतरं तरुणीगणम् ।
घननरस्विसमीरणसङ्गमा-च्चपलताऽऽपलतानिकुरम्बकम् ॥१६ ॥
हरितपर्णघनासु नवाम्भसामुपगमादधर्ताप्वतनुं तनुम् ।
त्रुटिदरिद्रविनिद्रसुमश्रिया-मतुलता तु लतास्वलसत्परम् ॥१७ ॥
अलिकुलेन चिरात्स्मरता रसं सपदि सेविनयोत्सुकचेतसा ।
अधिवन गिरिमल्लिकया स्फुट-त्कुसुमताऽसुमताम्मदकृद्दधे ॥१८ ॥
अतितमा धृतिदुर्विधताधृता, विदलयद्धृदयानि वियोगिनाम् ।
जलधरात्रसरस्य तु केतकी-नवसुम वसुमञ्जुलमुद्गतम् ॥१९ ॥
सलिलविन्दुभिरुन्नमनुव्रतं विहितमाशुगभूरिविलोडनै- ।
धवलपुष्पमिषात्स्फुटमागधी नवकुल वकुलं विहसद्बभौ ॥२० ॥
चरणकेसरभासि घनावली-कमलिनीमिलित गमि मानसम् ।
यदिह हसकुल तुहिनागुभ शतदल तदलङ्कृतवत्रभ ॥२१ ॥
इह जहर्षतरा रसवित्र क. ? परिसरे परितोऽपि विलोकयन् ।
फलभरैः परिणाकगुरूकृतै-रवनति वनतिन्दुकशाखिन ॥२२ ॥
तपनतापभरेण तपेतप -परवतीव कृशीकृतविग्रहा ।
गिरिणदी सहसा विहिता घनै-रुपरया परया जलसम्पदा ॥२३ ॥
अकृत या स्तरण तृणसन्तति-स्तपभवा सलिलस्य कृशात्मन ।
अतिसमृद्धिमिता तटिनीपयो-भ्रमिहतामिहतामुदवासयत् ॥२४ ॥
जलधरैरसिता परितस्तृणैः स्थगितसर्वपथाऽर्पितसाध्वसा ।
इह चिरेण पुरातनलक्षणै- परिचिताऽरिचिता नगरीव भू. ॥२५ ॥
तडिदुदञ्चनवारिदगर्जनै- प्रचयिना तमसा च मसीनिभा ।
प्रकृतिविक्लवमानपरिग्रह-स्थिरजनी रजनी समभाययत् ॥२६ ॥
नवमुदीक्ष्य घनं घनमम्बरे, ध्वनयतिस्म मुहुर्मुरलीं हरिः ।
हतमना कुसुमेषुपराभव-स्तवपुषावपुषा व्रजसुभ्रुवाम् ॥२७ ॥
स्पृशति कर्णतलं मुरलीकृते, मनसिजत्वरित तरुणीकुलम् ।
प्रचलितं रभसादवलोकितुं वकरिपुं करिपुङ्गवगामि तत् ॥२८ ॥
गिरिधरेण समं विजिहीर्षया युवतिभिश्चलिताभिरशङ्कितम् ।
श्रुतविवेकनयप्रणयोचित, निजगृहे जगृहे न गुरूदितम् ॥२९ ॥
भियमनाप्नुवतीभिरधिक्षप पथिसहायतयाऽऽयतयाऽतनो- ।
उपसृत प्रमदाभिरहो रहो-वनमितो नमितोद्धृतगोत्रभित् ॥३० ॥

अनुविलोक्य विना सुवलाग्रजा-मुपगता दयिता- स रिसंसया ।
मधुरनर्मवचोरचनादिभि, सदरमादरमाचरदच्युत ॥३१ ॥
कलयता बहुधा सकला कला, नगभृता रमिता सुचिराय ता ।
श्रमपय कणमौक्तिकभूषिता, मुमुदिरे मुदिरेण दरोक्षिता ॥३२ ॥
अतुलकेलिविधाभिरतूतुपत्, पशुपवामदृशो मधुसूदन ।
[illegible] ॥३३ ॥

अगमदाधवगत्य गता पुरो घनवन नवनन्दसुतप्रिया ॥३४ ॥
युवतिभिर्विहरन्तमिहाच्युतं, स्वयमवेक्ष्य चुकोपतरामसौ ।
प्रियपराऽसहना परसुभुवा, क्व सहते सह तेन विलासिताम् ।३५ ॥
स्फुटतर दुरपह्नवमञ्जसा, स्वमपराध मसावभयस्तदा ।
अतिविभाय निभाल्य पुरस्थिता, विवलिता वलितान्तिकर प्रियाम् ॥३६ ॥
परुपरोषकषायितलोचन-प्रियतमाधिनिराकरणोत्सुक ।
अभिनयन्भयमुक्तिपदं क्षणादनुनय नु नय बुबुधे हरि ॥३७ ॥
जनुरनुग्रहपूतकलावनौ, रुचिविगीतरमाऽथ कलावती ।
प्रशमनाय रुष सरस शनै, निजगदे जगदेकपटीयसा ॥३८ ॥
विकचसारससारसगुज्ज्वला, इशामुदञ्चय कौतुकिनि ! क्षणम् ।
स्फुरति हेमसमा विषमा तडित् तनुतमाऽनुतमाल-निभाम्बुदम् ॥३९ ॥
[illegible] ॥

ध्वनतिवारिधरे प्रमदोद्धता, विरचयन्ति चिरादपि ताण्डवम् ।
कलय चण्डि ! समेऽपि शिखण्डिन, समरुता मरुताधुतबर्हका ॥४१ ॥
शिखिकदम्बकनर्तनकौतुकी, प्रसभमेति मनस्विनि ! वारिदः ।
गुरुसमीरणसङ्क्रमवेगवद्गतिरय तिरयञ्जगतीतलम् ॥४२ ॥
मुरजमन्दरवोऽञ्जनमेचक, सुदति ! पश्य नभस्सरसि भ्रमन् ।
बिसलताश्चपलाश्च विलोलयन्, कलभता लभतां न कथं घन ॥४३ ॥
सरसि चम्बुजितस्फुटकिंशुके रुदितकोकनदे वद किंशुके ।
नहि निराक्रियते नलिनीदल-भ्रमधुरा मधुरारवसम्पदा ॥४४ ॥
सलिलबिन्दुचित- स्फुटकेतकीपरिमल परित प्रथयन्नलम् ।
मरुदसौ युवसन्ततसौरत- श्रमहरोऽमहरोऽध्वगराजये ॥४५ ॥
पुलकयन्नलिकासु कदम्बक, चुलुकयन् विरहिव्रजधीरताम् ।
वहति सम्प्रदयश्च सुलोचने ! अनिभृत निभृत दयिताश्रितम् ॥४६ ॥

अभिविसृज्यशनैर्गमनं प्रति-क्षणममौ प्रथयन्रभसोद्धतिम् ।
अविरलोन्नतपादपमञ्जसा वनमये नमयेद्घनमारुत ॥४७ ॥
चरणचञ्चुदलेन मुहुः स्पृशन् श्लथतनूमुपगूहति निर्भरम् ।
शिखियुवाऽनुनयेन तनीयसा, धुतरुषं तरुषण्डगत- प्रियाम् ॥४८ ॥
सुदति ! सा लसतीह सपल्लवा, नवमुपेत्य वपु- प्रसवश्रिया ।
अहह या तपनेन पुराऽऽतपे, वनलताऽनलतापमवापिता ॥४९ ॥
शवलितामवनीमिततस्तृणै-स्तरलिता तटिनी-सलिलागमैः ।
पथि समीक्ष्य जना- स्मृतवल्लभा, विकलिता- कलिता- स्मरसञ्ज्वरैः ॥५० ॥
अविरलाम्वुनिपातमहाहते-र्महिभृता हि भृताऽत्र सहिष्णुता ।
अनुपल खलदुर्वचनक्षते-रिवसता वसता बुधमूर्धनि ॥५१ ।
उपवने पवनेरितभृल्लता, किसलयै- सलयैर्नु युताशयै ।
सललिता ललितालिविलोलनै, र्व्यथयतेऽथ यतेरपि चेतनाम् ॥५२ ॥
कलय तन्वि ! शिखावलपुङ्गवो घनपयोधरवीक्षणसक्षण- ।
मृदुसहासदृशोऽसदृशो रुतै-श्चिरमय रमयंस्तनुते सुखम् ॥५३ ॥
किमु गुरोर्मुदिरादिह शिक्षितं, श्रुतिगिरां पठनं परित प्लवा ।
विदधते शृणु मानधने ! मना-गवटवो वटवो मुदिता यथा ॥५४ ॥
स्मरभटा किमु कामिजयोद्भटा, प्रचुरवर्षणहर्षणशालिनः ।
अधितटं सरसामिह दर्दुरा गुरुचिर रुचिर दधते रुतम् ॥५५ ॥
युवजनस्पृहणीयसमागम, रतिकलाकुशले ! घनवासरम् ।
गमयसि प्रहिले ! किमु हा मुधा, प्रियतमे ! यतमेनमवेहि माम् ॥५६ ॥
भुजयुगेन बलादुपगूहनं, किमु पुरेव न हन्त वितीर्यते ।
अहमहो यदि नाम चिरात्त्वया, ममतया मतयाऽस्मि समाधित- ॥५७ ॥
सरसिजाक्षि ! मयापि सुधारसे सुदति ! तावदधीयत गौरवम् ।
मधुरिमाऽधरविम्वफलस्य ते, रसनया स न यावदवेद्यत ॥५८ ॥
अधरबिम्वरसासवलोलुपो, ध्रुवमनन्यगतिस्तव किङ्कर ।
स्मितविजृम्भितवीक्षणतो जन, शुचिरसौ चिरसौख्यमिहाञ्चतु ॥५९ ॥
अहह ! मामव तन्व्यधरामृतै-स्तव पुरोऽपि निहन्ति शठो हठात् ।
निरनुकम्पनमुत्कटकम्पन-भ्रमकरो मकरोज्ज्वलकेतन ॥६० ॥
कथमहोललनाजनदुर्वहं, वहसि तन्वि ! मनोऽशनिकर्कशम् ।
कृतकयाऽद्रुणा रमणस्पृहां, पिदधती दधती स्मरयातनाम् ॥६१ ॥
हिमकरो नलिनञ्च जलाशये, सुभगमानितयाऽनुपमानने ।
वितनुतां कलहं न कथं मिथो, यदयि ते दयिते ! मलिनं मुखम् ॥६२ ॥

अपि निरीक्ष्य मृगाक्षि ! पयोधर-द्युतिमनङ्गशिखावलनर्तिनीम् ।
वहसि तन्वि ! कथं हृदये चिरा-दनवमा नवमानमियद्दृढम् ॥६३ ॥
जलधरीयनवोन्नतिवीक्षण-क्षुभितकामिकलापि-कलध्वनिः ।
प्रणयते शृणु सुन्दरि ! साम्प्रत, मम मनोऽमनोभववैकृतम् ॥६४ ॥
कलय वञ्जुलकुञ्जगृह प्रिये ! विरहणाय विविच्य पुरेव नौ ।
तरुणमत्तमयूरमनोहर-स्वरचित रचितं विधिना स्वयम् ॥६५ ॥
स्मितभवद्वदनच्छविमङ्गना-वलयमौलिमणेऽनवमानने ।
शशधरो भजते नियतक्षयं सकलया कलया कलितोऽपि किम् ॥६६ ॥
सुतनु ! पश्य मृगाङ्गनयाप्यहो, पुलकशालि समर्प्य वपुः स्वयम् ।
सफलितो निजनाथमनोरथ-श्चतुरयाऽऽतुरयाचितविज्ञया ॥६७ ॥
कथमये हृदय तव साम्प्रत, भवति मानपरिग्रहसाग्रहम् ।
जगति सन्ति न ते गगनोन्नते, घनचये नच ये चलचेतसः ॥६८ ॥
सफलयाङ्ग मदीयमनोरथ, प्रियतमेऽभिलषामि सह त्वया ।
विहरणं मुखभाविजितस्फुट-त्कमलयाऽमलयामुनसैकते ॥६९ ॥
परिचिनु श्रुतिचुम्बिकलोचने ! निजचिरानुचरं रुचिगोचरम् ।
त्वदसमाधरबिम्बलसत्सुधा-रसजुषं सजुषं सुबलस्य माम् ॥७० ॥
मदपराधमवैषि यदि प्रिये ! वितर दण्डमलं विसृज क्रुधम् ।
भुजलतानिगडेन बधान मामनखरैर्नखरैः कुरु च क्षतम् ॥७१ ॥
विरहय प्रहमायहसौम्यता, सुतनु ! यस्तनुते प्रमदं स्म ते ।
नभसि काननदोलमहोत्सवो, न स मया समयाद्विहितो वहोः ॥७२ ॥
इति भणन्तमनन्तमनन्तरं, समुदिताधिरुदस्रविलोचना ।
मनसिकृत्य तदीयवशीकृते-रियमुपायमुपालभत प्रियम् ॥७३ ॥
इदमवोचत साचिदृगच्युतं, प्रणयिनी स्फुरिताधरपल्लवा ।
गरिमलाघवयोरविवेकिनं, स्मरवश स्वशङ्कितकेकिनम् ॥७४ ॥
*कितवनायक ! तद् गृहदेहली-र्भजतु नित्यमलङ्कुरुता भवान् ।*
चटुभरैरबलाकुलवञ्चने, प्रभवता भवताऽर्चिपताद्य याः ॥७५ ॥
कपटकोविद ! विश्वसितीह का ? पुनरये विनयाभिनयेन ते ।
नयसि किं विपिने रमणीगणं, न चतुरश्चतुरः प्रहरान्निशाम् ॥७६ ॥
मसृणवाङ्मयपल्लवनादलं, प्रकटमाचरताऽप्यहितं त्वया ।
वचपटिता शठ ! मन्तुविनिह्नवे, कुशलता शलताऽवितथात्पथ ॥७७ ॥
कथमथाश्रुतु मोदमये मया, सरलया कितवव्रजवासव- ।
गुणकणैरपि वर्जितया भवा-न्नरमणी रमणीगणवल्लभ- ॥७८ ॥

अनुनयादपि सा वनमालिनः प्रियतमाऽऽयतमानममुञ्चती ।
निभृतमाप्य तदिङ्गितमन्तरा, ललितयाऽललितया समबोध्यत ॥७९ ॥
सुदति ! भावयति ध्रुवमञ्जसा, परिणतः प्रणयस्त्वयि मामद ।
समुचिता परिभूतिरमर्षणे ! न पुरुहूः पुरुहूतजिति प्रिये ॥८० ॥
स्मरधाङ्गनितम्बभराधिके ! शृणु मदुक्तमिदं सखि राधिके ।
अयमहो गुणगर्वितयोषितां, परमया रमयापि निषेवितः ॥८१ ॥
अयि कियद्विफलीक्रियते क्रुधा, ग्रहपरिग्रहसाहसिके त्वया ।
रहसि कान्तपुरेऽपि विलासिनी -प्रियतमोऽयतमोदकरोऽनिलः ॥८२ ॥
पदयुगप्रणतो मदिरेक्षणे ! रतिकलापकलापरमाग्रणीः ।
परिचितोऽपि चिरान्न किमीक्ष्यते, घनवनीनवनीतहरोहरिः ॥८३ ॥
सकलयौवतमानसवासिनि, प्रणिपतत्यपि सानुनयं मुहुः ।
गिरिधरे न कृपां कुरुषे कथं, नवतमा वत मानविधास्ति ते ॥८४ ॥
त्वदनृजुभ्रुकुटीक्षणविक्लवः प्रणतिभाक्पदपङ्कजयोरयम् ।
न मनुते नलिनाक्षि ! सुखाकरं स्वभवनं भवनन्दितगोकुलं ॥८५ ॥
उपनते मुदिरेऽकृतमन्तुना, प्रियवरेण नताङ्गि ! सहामुना ।
स्मरशरोत्करवर्षणमर्षण-स्थिरमते रमते भवती न किम् ॥८६ ॥
चतुरता-प्रथितेऽद्य दुरासदा, परिगृहाण पतिप्रणतीः सुखम् ।
न विफलीकुरु ते सुहृदामिह, प्रथमयाथ मया हितमीरितम् ॥८७ ॥
इति-सखीवचनेन शुचिस्मिता, प्रियमवेत्य निरागसमञ्जसा ।
स्मरवशा प्रसमाद जवेन सा, द्रवरसा वरसानुपतेः सुता ॥८८ ॥
सहृदयाहृदयात्तरुषा विधु-च्छविमुखी विमुखी रमणातुरा ।
किमधुना मधुना न पराजितः, यदतनोदतनो विकृतिं पुनः ॥८९ ॥
विशदहृक् स्मितमञ्जरिमञ्जुलं वदनवारिजमुन्नमयन्त्यसौ ।
सरलधीः दयितालिवचोऽमृतं-रपरुषाऽपरुषाक्षरमैरयत् ॥९० ॥
दिष्ट्या मदीहिततमा भवतोऽपि दोला-
लीला कलासु कुशल ! स्मृतिमाललम्बे ।
तत्किं विलम्बमवलम्ब्य तदर्थमार्वां
कादम्बिनी ध्वनिरियं त्वरयत्यजस्रम् ॥९१ ॥
यूथीकदम्बकुटजादिमरन्दहारी,
भारेण मन्थरमयञ्च वहत्समीरः ।
उत्तंसिताम्बुनवबिन्दुचयोऽत्र भूयः
प्राणेश ! दर्शयति निश्चितमानुकूल्यम् ॥९२ ॥

इत्थं प्रसन्नदयितावदनेन्दुनिर्यद्-
वाणीसुधामतिधयत्रघभिच्चकोरः ।
आयोजिता प्रथममेव कदम्बकाण्डे
प्रेङ्खोलिकां प्रमदसिन्धुरदर्शयत्ताम् ॥९३ ॥
हिन्दोलिका रचितपल्लवकल्पतल्पा-
मारोहयत्सपरिरम्भमिमां पुरस्तात् ।
सख्यौ च पार्श्वयुगले ललिता-विशाखे
पश्चादसौ स्वयमपि केलिकलाप्रवीणः ॥९४ ॥
सङ्गीतसाहायकमाचरन्त्यावाली नयो सरसजतो विलासे ।
शनैरथौचित्यविचारचुञ्चुः सलीलमान्दोलयत स्म दोलाम् ॥९५ ॥
स्वयं लोलान्दोला रभसपरिणाहेन महता
सखीद्वन्द्वेऽमन्द चलगति हरेरिङ्गितवशात् ।
अजस्रं त्रस्यन्ती स्मितविलसित कीर्लितनया,
झगित्यङ्कं पङ्करुहमचिरवक्त्रा स निदधौ ॥९६ ॥
दधती किलकिञ्चित न शक्ता, प्रियभक्तालिनिवारणे यदाऽसौ ।
वितताार तदा भियाऽभियुक्ता, धृतिमुक्ता हरये ह्यङ्कपालिम् ॥९७ ॥
तडितेव नवाम्बुदस्तमाल-श्लथया काञ्चनवीरुधेव लोलः ।
वृषभानुतनूजया तदानी-मुपगूढरशुशुभेतरां मुरारिः ॥९८ ॥
एवं चिराय दयितानुकरो यथेह
दोलाविलासमनुभूय वने विचित्रम् ।
क्षामामतर्कितगति कलयंस्त्रियामा
भीतो व्रजाधिपतिधाम जगाम कृष्णः ॥९९ ॥
अयं 'मायादेवी'-सुकृतिपटलीमौलिमहित-
प्रथी-'विद्यानाथ'-प्रभव-'बदरीनाथ'-रचितः ।
स्फुरद्गीतो राधापरिणयमहाकाव्यघटको
मितोरलेन्दुभ्यो[1] यतयमकसर्गो यतिमयात् ॥१०० ॥

*इति श्रीराधापरिणयमहाकाव्ये कृष्णाङ्के दोलाविलासो नामोनविंशः सर्गः ।*

१. उनविंश ।

*॥इति भव्यमूनविंश सर्ग ॥*

# अथ 'रासोल्लासो' नाम
## विंशः सर्गः

अथ[1] विशदसुधाकरास्यबिम्बा, शरदभित शरपाण्डुगण्डपालि ।
विमलतरपयोधरा मुरारिं, परिचरितुं रुचिराम्बरा बभासे ॥१ ॥
उपचितजलदर्तुवीरविद्विड् विजयविजृम्भितमुज्ज्वलं समन्तात् ।
विकचकुमुदपुण्डरीकदम्भा-दनिशमहो शरदो यशश्चकाशे ॥२ ॥
पुष्पन्धयान् द्विरददानसमानगन्धैः
सन्तर्पयन्नतिसुपर्वतरु कुतश्चित् ।
सप्तच्छन्द परिवृतो विशदैं प्रसूनै-
राच्छादयद् दश दिश. प्रसृतै परागै ॥३ ॥
माने जाग्रत्यग्रतो वर्तमाने, तान्ते कान्तेऽतन्वतीं दृष्टिसृष्टिम् ।
स्फार फुल्लोऽवेल्लयन्मारकोपं, व्यक्तीकुर्वन् कुङ्कुमः पङ्कजाक्षीम् ॥४ ॥
प्राणत्राण.दुर्घट प्रेक्षमाणा, भृङ्गक्वाणै· पान्थमाख्यान् प्रयाणम् ।
उत्कुर्वाण पञ्चबाणप्रताप, व्याक्रोशोऽभूदप्रमाणन्तु बाणः ॥५ ॥
दूरान्नभस्वति चिरादुपयाति साय
स्मेरैव तत्क्षणविकासिसितप्रसूनै ।
आकर्षिणा परिमलेन निकाममेका
शेफालिकाऽलिकुलकौतुकमूलमासीत् ॥६ ॥
अदृष्टपूर्वं जितबिम्बमोष्ठं, नितम्बिनीना नितरां विनिन्दन् ।
लावण्यपूर्णैं कुसुमैः सरागै रलङ्कृतोऽराजत बन्धुजीव ॥७ ॥
स्वर्णानुकीर्णैरिव पद्मरागैः, पुलिन्दमुग्धा निजभालभूषाम् ।
पिशङ्गकिञ्जल्कसनाथमध्यै र्बन्धूकपुष्पैरचयाम्बभूवु ॥८ ॥
ज्योत्स्नापयोभिरभित परिधौतविश्वे,
लोकप्रिये स्फुरति कोकवियोगहेतौ ।
आमोदि मोदितमधुव्रतराजि फुल्ल,
सौगन्धिक सलिलपूरमलञ्चकार ॥९ ॥
प्रतिक्षणक्षयत्पयो-वियोजनायतीकृता ।
सिताभवालुकासिता, बभौ तरङ्गिणीतटी ॥१० ॥

---

१ सर्गेऽस्मिन्नानाच्छन्दांसि, शरद्रासलीलावर्णनं च ।

पद्मरागभागहो, निकामकामदीपनम् ।
अभूत्पयः पयः प्रभ, सरोजराजिराजितम् ॥११॥
मयूरानुत्सृज्य स्वररुचिरता सारसमगात्,
कदम्बान् विस्मृत्य भ्रमरपटली बाणमगमत् ।
घनान् मुक्त्वा स्वैरप्रचरणरुचिर्भिक्षुमभजत्,
तथा हंसान् हित्वा वत जिगमिषा भूपमवृणोत् ॥१२॥
अभूवन् विपुलाकाराः करिदन्तनिभा दिशः ।
प्रतस्थिरे च वाणिज्य-व्यापृता परितो विशः ॥१३॥
यभौ शशिरुचा व्योम, व्योमकेशाग्रपुर्यथा ।
पयश्च तुहिनस्वच्छ, स्वच्छन्दगतिमत्यजत् ॥१४॥
पान्थाना सह चेतसा प्रतिपद प्राप प्रसाद पय.
सार्धं कैरवषण्डलेन नितरा तेनुर्विकास दिश ।
साकं प्रोषितभर्तृकाभिरमित ताप ययौ भास्करो
जीमूतैश्च सम समन्नसनम मौन दधुः केकिन ॥१५॥
मुखरश्चपलो धनीव तावद्, विपुलापव्ययतो विनष्टवित्तः ।
मुदिरस्तनितो चलोऽतिवृष्टे-रजलो लाघवमाप मौनिता च ॥१६॥
विततामसरोवरे विरेजु परिपूर्णे घनचन्द्रिकाभिरद्धि ।
उडव कलिकाः कुमुद्वतीनां, परिवार्य्यामृतधामबिम्बपुष्पम् ॥१७॥
वन्धौ तडित्वति गतप्रभुते विलीने
लोके विपक्षसितपक्षकलानुरक्ते ।
विस्मृत्य नृत्यमखिलाविकलाविषादा-
दाकुञ्चयन्नुचितमेव गिरं मयूराः ॥१८॥
विहाय मौखर्यमलीमसत्वे, शम्पास्थिरयश्चञ्चलतां च कामम् ।
प्रतिष्ठितो विष्णुपदेऽवदात-प्रभो विरागादिव वारिवाहः ॥१९॥
यैवस्यताशाकुमुदावतंसः, स्वर्वाहवीकूलविलासिहसः ।
क्षपामुखे चन्दनचन्द्रबिन्दु, र्वभावगस्त्यः प्रभया जितेन्दुः ॥२०॥
मर्यादे कृतपदः शरदः प्रभाव-
देकान्तवान्तदमम्मदमाश्रयद्धि ।
वारण्डवैः सहचरीमचिर्वर्जलान्ते,
भेरीस्वनोपमकल कलयाम्बभूवे ॥२१॥

शरदुपगमजागरूकमोद-व्यतिकरलब्धभवोऽप्रवाहि हृद्य ।
कुररकलकलो वियोगभाजा, श्रुतिसुषिरञ्ज्वरमाततान तीव्रम् ॥२२ ॥
उदयिनि तरणौ चिरात्प्रियाप्ते, शरद्युसङ्गमनाच्च केलिलोल' ।
अनुपममविराममस्तदोष, प्रमदमथानुबभूव चक्रवाक ॥२३ ॥
वामादृगञ्चलगचञ्चलताऽसिताभा-
गर्वापहारनिपुणो दयितानुवर्ती ।
धन्येन भर्त्र्यदिशि पूषणि हस्तसस्थे,
सौभाग्यभृ क्वचिदलोक्यत खञ्जरीट ॥२४ ॥
परिचितचरमप्यलिव्रजाय, स्फुटसरसीरुहवृन्दमुन्मरन्दम् ।
व्यतरदिह विचित्रसौरभाढ्य, रसनपराय वचोऽतिग विनोदम् ॥२५ ॥
विसृमरकलकूजितेन हारी, कवलितसारसकेसरोऽतिमाद्यन् ।
सरभसमिह लक्ष्मणोपगूढो, व्यधित सरस्सु च सारसो विलासान् ।२६ ॥
या पल्वलावटतटाकतटेषु शुक्ति
सर्वोऽप्यवेक्षत जन किल तुच्छदृष्ट्या ।
सा भूपमस्तकविभूषणमौक्तिकाना
स्वातीजलाधिगमनेन दधार गर्भम् ॥२७ ॥
अधिशुक्तिनिविश्य भास्वरं, नवरकिशकरस्रुतामृतम् ।
ननु मौक्तिकता ययौ भवे-दियती स्वातिजले प्रभा कुत' ॥२८ ॥
अधिशय्य मृणालमण्डल, झषहिंसाव्यसन समुत्सृजन् ।
दयिताधरचञ्चु-माधुरी, रसयामास बकोऽपि निश्चल ॥२९ ॥
शफर-कमठ-कुम्भिक्रौञ्चकादम्बभद्र-
प्रभृतिषु निदधौ या मूढतिर्यक्ष्वपि स्राक् ।
मदविकृतिमनूना वल्लभालङ्कृताना
सरसमनुजयूनां सा शरत् किन्न कुर्यात् ॥३० ॥
इन्द्रनीलमणिविस्तृतपट्टे, राजतीव सरलाऽऽयतलेखा ।
सायमायतनतो वहिरेतै, दृश्यतेस्म गगने सुरवीथी ॥३१ ॥
पङ्कनिस्सरणचारुभिरद्भि-रशादशोषसुगमैरपि मार्गै ।
निर्धनैन गगनेन च नूनं, प्रीतये शरदभूत् पथिकानाम् ॥३२ ॥
क्वचन च परिपाकोपक्रमे शालिमाला
विपुलकणिशकाण्डैः पिङ्गपालाशरोचि ।

अवनिमवनताङ्गी कुर्वती मण्डयन्ती
व्यधित मुदमुदग्रां पश्यतां कर्षकाणाम् ॥३३ ॥
नवरात्रमहोत्सवेऽम्बिकायाः परित: प्रत्यहमादरेण धन्याः ।
विभवोचितसम्भृतिप्रवेकैः विधिसिद्धा सुखमाचरन् सपर्य्याम् ॥३४ ॥
विहितोरुमहा महानवम्या, सह योधै: समरोद्धुरा धुरीणा ।
धरणीपतिपुङ्गवा प्रवीरा, विविधानि स्वयमायुधान्यपूजन् ॥३५ ।
अधिदशमि विसृज्य प्राज्यभावेन दुर्गाम्
प्रबलबलसहाया दक्षहस्तात्तखड्गा: ।
द्विजवृषभकृताशीराशिना वर्धमाना:
क्वचन विजययात्रा चक्रिरे चक्रपाला ॥३६ ॥
वारणै गिरिवरैस्तदावृता, तद्बलोद्धतरजश्छलाद् ध्रुवम् ।
आरुरोह पृथिवी दिवं जवाद्, वक्तुमुग्रतरयातना पृथुम् ॥३७ ॥
कोशनिस्सृतकृपाणजृम्भित, स्तब्धकार्मुककरालटङ्कृतम् ।
साम्युगीनभटवल्गितं तथा, कम्पनेक्षकजनानकम्पयत् ॥३८ ॥
गर्जत्सु द्विरदेषु वाजिवलये हेषाविशेषान् मुहु-
स्तन्वाने, निनदत्सु तूर्यपटहग्रामेषु चानेकश: ।
शब्देऽस्मिंस्तुमुले जनश्रुतिपुटं प्रस्फोटयत्यञ्जसा
शङ्के साध्वसयाधितै: फणिवरैश्चक्षुश्श्रवस्त्वं दधे ॥३९ ॥
उपस्थितायामपि पूर्णिमायामस्तं प्रयाते च सहस्ररश्मौ ।
सस्मार ग्वालावलयाय दत्तं, वरं हिमर्तौ व्रजराजसूनु: ॥४० ॥
आनन्दयिष्यन् व्रजसुन्दरीणां दृशः कृशाश्रीकृतपुण्डरीका ।
जगाम वृन्दाविपिनं मुकुन्दश्चन्द्रश्च पूर्वाचलचारुचूडाम् ॥४१ ॥
हासं याति कुमुद्वतीसमुदये चक्रे चिरं क्रन्दति
ध्वान्ते नश्यति सङ्कुचत्यभिभवादम्भोजिनीमण्डले ।
जीवञ्जीवकदम्बके च रभसात्पीयूषमाचामति
क्षोणीं क्षीरनिभप्रभाभिरभित: प्रक्षालयच्चन्द्रमाः ॥४२ ॥
कृशदलोत्करवृन्तविलैरलं, निपतिता: परितो विपिनावनौ
विटपिमूलनिलीनमपि स्फुटं, विधुकरास्तिमिरं निरकासयन् ॥४३ ॥
शशिरुचा रजनी दिवसायिता, श्रितवनीमवलोक्य विशङ्किता: ।
न निरगु: क्षुधिता भृशमप्यहो, निजकुलायनशाद्विह पेचका: ॥४४ ॥

व्याधुन्वन् विरहिव्रजस्य हृदयं तन्वङ्गगर्वाञ्जितं
वद्धान् कैरवकोरकेषु मधुपानद्धा करैर्मोचयन् ।
चेतोभिः सह यौवतस्य च मनागुद्वेलयन् सागरं
गोविन्दस्य बभूव नर्मसचिवः पूर्णेन्दिरश्चन्दिरः ॥४५ ॥
अविरलसम्पतदैन्दवप्रभा-व्यतिकरधौतमलीमसच्छविः ।
अकलि समीक्ष्य विवेचकैस्तदा, तरणिसुताऽपि चिरस्य जाह्नवी ॥४६ ॥
बहलपिशङ्गमणिस्थलीपत-द्विधुरुचिराशिमवेक्ष्य कुत्रचित् ।
रविकरभासुरवासरभ्रमा-न्निशि सहसा विचकास पद्मिनी ॥४७ ॥
दलत्कुमुदकोरकस्फुरितसौरभासादन-
श्लथद्व्रतिनभस्वता सहकृतः स्मरोत्तेजितः ।
व्रजेन्द्रतयनान्तराङ्कुरितमात्ररासस्पृहा-
मकन्दलयदिन्दिरानिधिरतन्द्रचन्द्रातपः ॥४८ ॥
सविलासरासकुतुकाय हरन्, व्रजहारि हारिणदृशां हृदयम् ।
विततान तानलयपल्लवितं, मधुसूदनो मधुरवेणुरवम् ॥४९ ॥
तरुमण्डपप्रतिनिनादगुरुः, ध्वनिरेष भूमिवलयं न परम् ।
अपितु त्रितये जगतां जनता-श्रुतिशष्कुलीमसुखयन्नितराम् ॥५० ॥
अन्तस्तत्त्ववशीकृतिं गुरुजनत्रासस्फुटोच्चाटनं
लज्जास्तम्भनमन्यवृत्तिदलनं चैतन्यसम्मोहनम् ।
आकर्ण्य विपिने गृहाच्च रजनावाभीरवामभुवा-
मद्वैवाकृत सिद्धमन्मथमनुं श्रीकृष्णवेणुस्वनः ॥५१ ॥
मुकुन्देरितं वेणुमाकर्णयन्त्या, परानन्दमन्तस्तले भावयन्त्या ।
अरङ्गामिनोऽपि क्षणं स्तब्धकाया-स्तरङ्गा बभूवुः कलिन्दात्मजायाः ॥५२ ॥
तदा मण्डलीभावितैरस्समानैः, श्रिया सम्पदा चोपकार्यासमानैः ।
समारब्धतौर्यत्रिकैः कम्पमानैर्नभः पूर्णमासीत् सुराणां विमानैः ॥५३ ॥
शरद्राकायोगादपि च हरिवंशीनिरामनाद्
द्विधा मोदं बिभ्रत्कुमुदकुलनाथोऽमृतनिधिः ।
द्रवच्चेता नूनं क्वचिदकृतपूर्वं बत सुधा-
रसासारं स्फारं करनिकरनालैः समकरोत् ॥५४ ॥
पुष्पभारं तदा शाखिनः सन्नता, पल्लवौघं नभस्वद्विलोलल्लताः ।
स्तब्धकर्णाः स्वरोमन्थवृत्तिं मृगा-स्तत्यजुः किञ्च हिंसारसं श्वापदाः ॥५५ ॥

अक्षिपन् पक्षिणः शावकाश्वासनं, व्यस्मरन् घस्मरत्वेऽपि लब्ध्वाऽशनम् ।
प्रीतिसिन्धौ निमग्नाश्शिरायाभवन्, नैव निद्रामपि द्रागपि प्रापुवन् ॥५६ ॥
घोषं प्राप्य मनस्विगोपललनाकर्णान्तलग्ना रहो-
व्यापारं विपुलैस्तदन्तरमितं सन्दीपयन्ती स्मरम् ।
ता वेगादनुनीय गन्तुमनसः सम्पादयन्ती यथा,
दूतीकृत्यमहो चकार चतुरा वंशीरुतिः कैशवी ॥५७ ॥
प्रथमं पृथुमन्मथभीविधुता, विधुतापकराननपद्मनुता ।
चलिता ललितादिसखीवलिता, वलिताधिकचा वृषभानुसुता ॥५८ ॥
अभिलप्य सम हरिणा, विहृत, हरिणायतदृक् परितो निभृतम् ।
सदनादखिलादतिवेगपरः, प्रचचाल ततस्तरुणीनिकरः ॥५९ ॥
नितान्तं सम्भ्रान्ताः पशुपकुलकान्तामृगदृशो
न भूषाव्यत्यास नच पटविपर्य्यासमविदुः ।
परं स्वैरोदञ्चत्कुसुमशरवैरोदितविपद्-
धुरावृन्दा वृन्दाविपिनमनुगोविन्दमगमन् ॥६० ॥
प्रत्यूहमूहविपयातिगं गृहे, निर्धूय भूयसि मनोरथे स्थिता ।
वंशीरवश्रवणमुग्धचेतसो, हंसीगतो रतिरति-प्रयापिताः ॥६१ ॥
नीतिं समीक्ष्य विपुलं सभाजयन्, प्रीतिं परीक्षितुमनङ्गविच्युतः ।
कान्तारमण्डलमुपागतास्ततः, कान्तारसादिदमवोचदच्युतः ॥६२ ॥
अये व्रजनतभ्रुवो ध्रुवमपास्य लोकस्थिति
विधूय गुरुवारणं, परिजनानुपेक्ष्याञ्जसा ।
वनं निशि वतागता रहसि निस्सहायाः स्फुट
ब्रुवन्तु कुलबालिकासमुचितः किमेष क्रमः ॥६३ ॥
क्व यूयमोकस्य निमित्तभीरवः, क्व चैप दोषा घनकाननागमः ।
न शोभते बालकुरङ्गलोचनाः ! कुलाङ्गनानामतिसीम चापलम् ॥६४ ॥
अमूल्यमक्षुल्लमहार्यमक्षयं सुरक्षितं शीलमिहाङ्ग केवलम् ।
अलङ्करोति च्युतदूषणं सदा, विभूषणेभ्योऽप्यधिकं कुलाबलाः ॥६५ ॥
पद्मिन्योऽहिमरोचिषा विरहिताश्चन्द्रेण हीनाः क्षपा
वन्या माधवमन्तरेण सरितस्तोयप्रवाहच्युताः ।
केका नूतनवारिवाहविधुरा दानाद्वते सम्पदो
न श्लाघाविषया भवन्ति चपलाः ! शीलं विना चाङ्गनाः ॥६६ ॥

परेण पुंसा निशि सङ्गता रहो, जना विनिन्दन्ति यतो नितम्बिनी: ।
तदीदृशं हन्त विमृज्य साहसं, प्रयात यूय सकलाः स्वमन्दिरम् ॥६७ ॥
उपोढया धीरतया जगद्दयादुदस्य लोकद्वयभित् कुतूहलम् ।
कलङ्कपङ्कादवताऽङ्गनाऽखिलं, शरन्निशानायकनिर्मलं कुलम् ॥६८ ॥
पद्मेक्षणा ! प्रणयिनो न कदापि पूर्ण
प्रेमप्रपाकमपकर्षति विप्रकर्ष ।
इन्दौ रवौ वसति, विष्णुपदेऽन्यथा किं
याति क्षितौ कुमुदिनी नलिनी च मोदम् ॥६९ ॥
इति केशवस्य कथनेन, शिशिरशशिनिभाननाः ।
त्रस्तहरिणशिशुलोलदृशो, दद्दशुर्दशापि वशिका दिशोऽङ्गना ॥७० ॥
अवलोकितु वदनमस्य, सजलनयनास्तदाऽक्षमा ।
रासरमणगलिताशहृदो, धरणीदृश: कथमपीदमूचिरे ॥७१ ॥
मुरलीरवश्रवणोदितस्मरसन्ज्वराहतचेतना:
सहसाऽ वहेलितबन्धुवृन्दगिरो, विमुक्तनिकेतनाः ।
त्वयि कृष्ण ! विश्वपता विहायगता विलासमहारसा
वद नन्दनन्दन ! न पुनर्विजहासि केन वतागसा ॥७२ ॥
चराचरात्मानमनन्तमेकं, भवन्तमामेवितुमागमो न ।
किमन्यवायस्य भवेत्प्रसोनु-मीश कदाचिद् बककजित् ! कलङ्कम् ॥७३ ॥
अङ्गीकरोतु स्वजन किलास्मान् कस्मादिदानीमवहेलिताङ्ग: ।
त्वयाऽप्यथीदास्यमुपास्यते चेत्, तदा गति काऽस्ति वदाबलानाम् ॥७४ ॥
इत्थं तासां प्रियपरिभवत्रासशुष्यन्मुखीनां
लीलाक्षीणा प्रणयशवला वाचमाकर्ण्य दीनाम् ।
हृत्यन्तस्तरुणकरुण कृष्णचन्द्र महासं
कर्तुं तीर्यत्रिकपरिचित प्रावृतनत्र रासम् ॥७५ ॥
स्पृहितकेलिविधावथसुभ्रुवा गुणनिधावनुकूलति वल्लभे ।
सह मुदश्रुकर्णर्जगलु शुचो विचकसुश्च मुखानि सम हृद्रा ॥७६ ॥
विगणितायनदूरगमश्रमा मुदनुद्रिगुणीकृतविभ्रमा ।
अलमलङ्कृतलास्य कलाचला, वभुरिवाप्सरसः परागयला ॥७७ ॥
भूरेवाम्तरणं गर्भामुद्रिगिन ग्मीन विनान नभ
गीतांजोऽनिशयाश्रयश्च पत्रनामस्य प्रदीप शशी ।

आसीदुच्छ्रितयामुनोर्मिमरसा सा किल वृन्दाटवी
रम्या रासमहोत्सवे भगवतः कृष्णस्य रङ्गस्थली ॥७८ ॥
मुक्तामसः कुण्डलशालिगण्डा, लीलास्फुरत्कोमलबाहुदण्डाः ।
रम्भाविशाखाललितासुमित्रामुखाः सखीश्चन्द्रमुखीः सचित्राः ॥७९ ॥
दुरासदाभीष्टविजिष्टमिद्धे दृगम्बुजद्वन्द्वलसन्मुदस्ताः ।
अतिस्निग्धत्वात् परिमण्डलेन, क्ष्वेलाप्रगल्भं स परस्परहस्ताः ॥८० ॥
व्याचलगत्कवर्गी तरङ्गितदृशा स्मेरानना सुन्दरी
शिञ्जानाभरणा सरागचरणाम्भोजापपूर्वप्रभाम् ।
आदायाशु करेऽम्बुजद्युतिहरे प्राणाधिका राधिका
सद्वेश प्रविवेश मध्यमतुलश्छायानव केशवः ॥८१ ॥
त्रिकविवर्तनमप्रममुत्रय, कटितटीभृकुटीनटन मुहुः ।
चरणविन्यसनञ्च लयानुग, युवतयो विदधुर्मधुजिन्मुदे ॥८२ ॥
अतिचिरलमनोरथपोषित-व्रपमवाप्य समीपमुपस्कृता ।
कटिकृशाः सुदृशो भृशमामृशन्, गिरिधर गतिभङ्गिभिरङ्गना ॥८३ ॥
रमणीयकङ्कणकिङ्किणीकरतालनूपुरनिस्वन
कलगीतकल्पितवल्लकीध्वनिकोकिलस्वरलाञ्छनः ।
धुतपाणिपल्लववल्लवप्रमदागणप्रमदावहः
स्मितशालिनो वनमालिनो विललास रासमहामहः ॥८४ ॥
अवीवदत्काचन तत्र भेरी-मन्या विपञ्चीमितरा मृदङ्गम् ।
शृङ्गं परा नृत्यपरा सुमध्या, मध्याश्रितोनन्दसुतश्च वेणुम् ॥८५ ॥
ततस्ततः सन्ततनाकलोक-मानन्दमानन्दनिनादहृद्यम् ।
घन घनं सत्सुषिरं विरञ्च, ध्वनद्धारानुपमानमानम् ॥८६ ॥
रासावलोकन-विलग्नमतिः प्रमादात्
तस्थौ चिरं हिमकरो यदिहाभमध्ये ।
मिक्ता स्मृतं भृगमर्गा ननु तेन राका
सर्वत्सरार्धपरिमाणमवाप्तदायुः ॥८७ ॥
मुनिभावितकृष्णरासलीलाः प्रणुवन्तः स्वरुचोनिरस्तमीलाः ।
अमरा वरवर्णिनीसहाया, ननृतुर्व्योमनि हृष्टलोमकायाः ॥८८ ॥
प्रमदाश्रुपृषत्कदम्बकस्य, प्रमदाश्लेषमवाप्य लाम्यभूमौ ।
सहसा सह साधु साधुनादैः, मुमुचुर्व्योमचराः प्रसूनराशिम् ॥८९ ॥